# ईसब्नीतिकथाः ।

## द्वितीयो भागः ।

नारायण बाळकृष्ण गोडबोले.



मूल्यं ६ आनाः ।

॥ श्रीः ॥

# ईसब्नीतिकथाः ।

# ÆSOP'S FABLES.

## PART II.

CONTAINING SEVENTY-FIVE (61-135) FABLES OF ÆSOP.

TRANSLATED INTO SANSKRIT

From the Marâthî Text of

SADÂS'IVA KÂS'INÂTHA CHHATRE,

BY

NARÂYÂṆA BÂLAKṚISHṆA GODABOLE, B. A.,

VICE PRINCIPAL, TRAINING COLLEGE, POONA.

SIXTH EDITION

PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR "NIRNAYA-SAGAR" PRESS,

Bombay.

1916.

Price 6 Annas.

अथ

# ईसब्नीतिकथाः ।

## कथैकषष्टी ( ६१ )।

### श्येनपिकयोः ।

कश्चिद्धातुरेकदोत्सेधवन्तं तमालशाखिनमधिष्ठाय सुस्वरं जगौ । तद्गानेन साटवी निबद्धप्रतिशब्दा बभूव । ततस्तत्स्वनाकृष्टो नातिदूरे परिभ्रमन्बुभुक्षापीडितः कश्चिच्छशादनः सरभसं तमाक्रम्य खरनखैश्चकर्ष । यावच्च तं जिघत्सति तावत्स तमभिधत्ते—"भोः, मयि दयस्व । नेदमुचितं ते निष्ठुरं कर्म । पश्य नाहमागस्कृत् । भक्षितेन मया ते ग्रासोऽपि न भविता । कमप्यन्यं तर्हि महाकायं विहंगमं जहि । एवं कृते यश आप्नोषि, उदरपूर्तिश्च ते भविष्यति । मुञ्च मां तावदनाथम् ।" पत्री तं प्रति ब्रवीति—"आँ, ज्ञायते । अवितथमाह भवान् । कण्ठशोषं भाषस्व त्वम् । परमहं प्रभातमारभ्य निरशनेन म्रिये । त्वं च दिष्ट्या मम हस्ते पतितः स त्वमात्थ 'उत्सृज माम्, अन्यं स्थूलविग्रहमण्डजं तृण्ढि इति । ब्रूहि त्वमेव, एवमनुष्ठिते मूढशब्दभाक्को भवेत् ।"

तात्पर्यम् ।

व्यवसायिनो नरो लाभस्याल्पत्वमहत्त्वे न गणयन्ति । अपि तु प्राप्तंप्राप्तमङ्गीकुर्वन्ति । गहनस्तावत्कालमहिमा ।



१. कोकिलः.

× कण्ठं शोषं शोषम् इति तु वाच्यम् ।

सहस्रधा च विघ्ना अभिभवन्ति । बुद्धिरपि नश्वञ्चला, भङ्गुरं चेदं जीवितम् । ईदृशानन्तरायानालोच्य तात्कालिकं लाभं विहायायतिकं लाभमालम्बमानो मन्दधीरन्तेऽनुशेते ।

---

## कथा द्वाषष्टी ( ६२ ) ।

### छिन्नलाङ्गूलस्य सृगालस्य ।

काचिच्छिवोन्माथे पुच्छे धृता सती तच्छित्वोच्चलिता । एतावता हृष्यति चिन्तयति च सा—"यत्र जीवितसंशयोऽभूत्तत्र लाङ्गूलच्छेदेन मुक्तिरभवत्" इति । स च भूरिमाय आत्मीयान्प्रति जिगमिषति यदा, तदा पुच्छराहित्यविषये महान्तं विषादमनुबुभूषुरुपाशु मन्त्रयते—"अहो, वरं प्राणैर्वियोगो न पुनरीदृशी मानहानिः । आस्तां तावत् । गतं न शोचामि । कथमस्य स्वानुकूल्येन पर्यवस्थापनं विधेयम्" इति । एवं बहुविधं चिन्तयता तेनैको मृदुरुपायश्चिन्तितः । स ब्रवीति—"अहं गोमायुसमजस्याग्रे चक्षे—भोः, पश्यत बालहस्तं छित्वापूर्वोऽयं भूषाप्रकारो मयोपन्यस्तः । यतश्चायमादरणीयः, तस्मात्स्वीकारमर्हति ।" एवं संप्रधार्य स मृगधूर्तकानां यूथमाहूय तस्मिन्समुदये तस्यापूर्वभूषाप्रकारस्य चर्चामनेकधाकार्षीत् । सोऽभिदधे—"निष्प्रयोजनान्यस्माकं लूमानि । तत्रापीमे शृगालबालधयस्तु केवलं भारात्मकाः । एकतस्तावद्ध्रसितपुच्छत्वं भूषणम्, द्वितीयस्तावत्पलायनप्रसङ्गे द्रुततरगमनशक्तिमत्त्वमनेन संभवतीति पूर्वं मनसि कृत्वा पश्चात्तदनुष्ठितं मया । तावता सत्यप्रतीतिरूपस्यानुभवस्य भाजनमभूवम् । वालधिच्छेदनात्प्रभृति च सुख्यहमभवम् ।"

एतावदुक्त्वा विरम्य कियन्तो मामनुव्रजन्तीति सर्वेषां मुखेषु बद्धदृष्टिरभूत् । अत्रान्तरे तन्मध्यात्कश्चित्प्रवयाश्चौर-कर्मशौण्डो वञ्चक उत्थाय तस्य वचसां छलं बोधित्वा सग्रीवाभङ्गमुवाद—"भो लब्धवर्ण, कृतं तवोक्तिपाटवेन । लाङ्गूलच्छेदेनासंशयं भवन्तः कृतिनोऽभूवन् । परं यदा जीवित-संदेहदोलां वयमधिरोक्ष्यामस्तदा वयमपि तत्त्यक्ष्यामः ।"

तात्पर्यम् ।

यदि सर्वेऽप्रमत्ता अभविष्यंस्तर्हि व्यर्थमन्यप्रयोजितान-भिनवान्भूषाप्रकारान्कोऽपि नाग्रहीष्यत् । पुंसु प्रायः सर्वे भूषाप्रकाराः स्वस्वमानितां प्रकटयितुं किमपि छिद्रं गोपयितुं वा प्रयुज्यन्ते ।

---

## कथा त्रिषष्टी ( ६३ )

## जीनान्तकयोः ।

कश्चिन्निष्कलो विश्लथसर्वगात्रः स्थविर इन्धनान्यानेतुं वनं गत आसीत् । तत्र दारुखण्डानि संचित्यैकत्र बद्ध्वैकपिण्डीकृतं तं काष्ठभारं शिरसि कृत्वायासेन पदानि मन्दं मन्दं निक्षिपन्गृहं प्रतिनिवर्तमानोऽध्वनो विप्रकृष्टत्वादिध्मानामतिगुरुत्वाच्च स शश्राम । अतः काष्ठभारं मूर्ध्नोऽवतार्य स भूमौ निषसाद । तस्मिन्नवसरे स शमनमाह—"रे चेतनमात्रस्य विश्रामक, एहि । मामेभ्योऽखिलेभ्यो दुःखेभ्यो मोचय" इति । एतच्छ्रुतवान्वैवस्वतस्तस्य जीर्णस्य पुर आविरासीत्तमपृच्छच्च—"तात, किमित्यहं स्मृतस्त्वया ।" स जरन्नावैद्यत्परेतराड्भे नेदीयानस्तीति । स वृद्धस्तस्योग्रं रूपं

विलोक्यैव नष्टसंज्ञोऽजनि । ततः कतिपयैः पलैर्लब्धसंज्ञो वेपमानगात्रयष्टिः प्रतिवचनं ददाति—"भो धर्मराज, अशक्तोऽहम् । मम शीर्षस्थितोऽयं दारुखण्डभारः सहसा भूमिमापेदे । तमुद्धृत्य पुनरुत्तमाङ्गस्थितं करिष्यसीति स्मृतो मया भवान् । नन्वियदेव कार्यम् । अनेन खलु यद्यवज्ञातोऽस्मीति जातामर्षोऽत्रभवान्प्रणिपतामि ते पादयोः । क्षमस्व माम् । कृपालुर्भूत्वा यथागतः प्रतिनिवर्तस्व ।"

## तात्पर्यम् ।

लोकसरणिरेवेदृशी संजाता यत्ते पितृपतेः परिहासं कुर्वन्ति । क्षुद्रेष्वपि व्यसनेषु ते व्याहरन्ति वरं निधनमस्मादिति । परंतु यावद्दूरतो मृत्युस्तावदेवैषा वल्गना । अभ्युपपन्ने तस्मिंस्तमेव संसारभारं पुनर्ग्रहीतुं त एव सिद्धा भवन्ति । कियतोऽपि दिनाञ्जीवेमेत्याशासते । कङ्कालतां नीते शरीरे सहस्रविपदभिभूतेष्वपि जरत्सु जीविताशा पदं करोति किं चित्रं तर्हि यदि वयःस्था जीवितुमुशन्ति । समासतः "जातस्य हि ध्रुवो मृत्युः" इति विज्ञायागते तस्मिन्यस्तस्मान्न बिभेति तं चानुसरति स एव विचक्षण इत्यवगन्तव्यम् ।

---

## कथा चतुःषष्टी ( ६४ ) ।

## कामिनो हर्यक्षस्य ।

कस्यचिदरण्यौकसः पुत्र्यतीव रूपवती बभूव । कदाचिद्दर्शनपथं गतायां तस्यां कश्चित्पञ्चास्यस्तां चकमे । स एवं मन्मथोन्मादमथ्यत यत् "प्राप्तायां तस्यामहमसून्धारयामि,

नो चेदनङ्गो नामसान्वयं मां करिष्यति" इति तस्मै प्रतिबभौ । ततोऽविलम्बितं नष्टाशङ्कः स तस्याः पित्रे निवेदयामास, समुदजहार च–"मां ते जामातरं कुरु" इति । तत्तस्यासंगतं वचः श्रुत्वा तत्पिता मनसीत्थमकरोत्–"यद्यहं प्रत्याचक्षे, अयमधुनैव मां विदार्य पारणामविहतां कुर्यात् । तर्हि तथेति प्रतिपाद्य उपधिनासौ विप्रलोभ्यः ।" ततः स हरिमाख्यत्–"भो मृगराज, बाढमहं तुभ्यं दुहितरं ददे, परंतु किमपि ते मन्त्रयितव्यमस्ति । मे दुहितातीव पेशलावयवा, तव रदना नखाश्चातीव खराः । तेभ्यस्तस्या बाधा जायेत । कात्र प्रतिपत्तिरिति । भवान्वदिष्यति तद्विषयेऽहमवहितो भविष्यामीति तत्रापि शृणु । अप्रमत्तेऽपि भवति सा विगतभीर्नैव भवेत् । ससाध्वसायां तस्यां तव केलय उभयोरपि न सुखमावक्ष्यन्ति । निरूपयत्वेतदार्यः । तर्ह्येतावती मेऽभ्यर्थना तव रदपातने नखरकर्तने चानुज्ञातुमर्हसि । एवं कृते दुहितरं तेऽर्पयामि ।" पुण्डरीकः कामान्धः प्रत्युवाच–"को दोषः, एवं क्रियताम्" इति । वनौकाः सद्यस्तस्य दशनान्निपात्य नखानि कर्तितवान् । अनन्तरमेकं स्थूलं मुद्गरमादाय तस्य मृगदृष्टेर्गोधिदेशे प्रजहार । तेन प्रहारेण स तस्मिन्नेव क्षणे गतासुरभवत् ।

तात्पर्यम् ।

ये कामाधीनमानसास्ते शूरा अपि विक्रान्ता अपि बलवन्तोऽपि नश्यन्ति । तथा ये सपत्नानां पीयूषतुल्यैर्वचोभिर्मोहयित्वा महाधनं प्रियं च स्ववस्तु तेषां हस्ते पातयन्ति ते लुप्तसर्वस्वा भवन्ति ।

---

## कथा पञ्चषष्टी ( ६५ ) ।

### सिंहीक्रोष्ट्र्योः ।

कदाचित्सिंही सृगाली च संजग्माते । तदा कथाप्रसङ्गेन तिर्यक्षु का जातिर्बहुप्रसवेति वस्तूपन्यस्तमभूत् । तस्मिन्नवसरे जम्बुकी सिंहीमश्रावयत्—"प्रसवविषये कान्या जातिः शक्नोति शृगाल्याः षोडशीमपि कलां स्प्रष्टुम् ।" साह—प्रतिसंवत्सरं यद्यपि नो अधिकवारं तथाप्येकवारं वयं सूमहे । प्रतिप्रसवकाले च नैकान्पृथुकान्सूयामहे । परंच काश्चन जातय ईदृश्यः सन्ति, यत्ताः प्रसव एकमेव शिशुं सुवते तदपि जातु जन्मनि सकृदेव । एवं सत्यपि को नाम तेषामवलेपः । एतेनापि घोणामुन्नमय्यान्यान्विगणयन्ति । फेरवी मामधिकृत्य सोपालम्भं ब्रवीतीति चित्रकायात्मनि भावयामास । ततः सा तामाह—"अये, अपि शृणोषि । यूयं परेष्टुका इति वस्तुगत्यावितथम् । परं किंनामकास्ते शावकाः फेरव एव, वयं तु सकृत्सवामः, परमवेहि तं शिशुं सर्वतिरश्चां राजानं वदन्ति ।"

### तात्पर्यम् ।

यस्यात्मनः प्रभवो जायते तस्य मूल्यं न संख्यानुरोधेन करणीयम्, अपि तु जातिमनुरुध्यैव । यद्यपि वयमल्पान्परिश्रमान्कुर्मस्तथापि त एव प्रशस्याः, यदि त आधुनिकानां तेषां पुत्रपौत्रादिसंततेश्चातीवोपयुक्ताः । नो चेदेवं शृगालशुनां प्रभूतसंख्यप्रसूतिरिव ते जनपदोपप्लवकारिणो भवन्ति । अन्यदपि कथाया अस्या बीजं संभवति । कियन्तः सूरयोऽनेकग्रन्थप्रणयनेन गौरवं मन्यन्ते तदसत् । शतं विगुणान्ग्रन्थान्प्रणीय किं पठनेन लोका आयासयितव्याः। अस्मादद्धि-

तीयस्य सर्वसंमतस्य ग्रन्थस्यैकस्यापि संविधानेऽस्ति गुणोत्कर्षः।

---

## कथा षट्षष्टी ( ६६ )।

### शम्बरतद्वत्सयोः ।

कस्मिंश्चिच्छम्बरे कैशोरं प्रपन्ने सोऽन्यशम्बरान्दुदाव । स भूमिं पादप्रहारैरतीतडत्, विषाणे असकृदधावीत्, तारस्वरेण तथारावीद्यथा तच्छब्देन सर्वे बद्धभियश्चकम्पिरे । अन्येद्युस्तस्य शावस्तमभ्येत्य पृच्छति–"अये, यस्त्वं बलिष्ठोऽहं दुर्जेयोऽहमिति महान्तमाटोपं दर्शयसि, स त्वं विश्वकद्रुरवे श्रुतमात्रे भीत्या प्राणपरीप्सया प्रपलायसे । अपि ब्रूषेऽस्य हेतुम् ।" शम्बरोऽब्रवीत्–"जात, ऋतमब्रवीस्त्वम्, परं कथं तद्भवतीत्यहमपि न बोधामि । अहं खलु स्वजात्यां तेजस्वी ऊर्जस्वलश्चास्मि । मुहुरहमात्मनि निश्चयमापादयामि । नाहमितःपरं कस्मादपि भियमुपेत्योद्विजिष्य इति । परं किं कुर्वे शुनकभषण आकर्णितेऽहं लुप्तप्रतिपत्तिर्भूत्वा यथाशक्ति सत्वरं धावाम्येव ।"

### तात्पर्यम् ।

दम्भिनः कलहप्रियाश्च पुरुषा अवसाने क्षीणबला भवन्ति । तेषां डम्बरः सहचरेष्वेव द्रष्टव्यः । शूराणामग्रे न ते स्थातुं प्रभवन्ति । यस्यास्यं नक्तंदिवं शौर्यस्य च विक्रमस्य च कथा उद्गिरति तस्मिन्कश्चिद्वीरोऽक्षिणी विस्फार्य सभ्रूभङ्गं दृष्टिं पातयतु । एतावतैव स निस्तेजस्को भवतीति प्रतीतिः । ईदृशस्य मृषाप्रगल्भस्यापमाने साक्षित्वमपूर्वम् । यतस्तस्मिन्काले स भयत्रपासाधारणे रोषेऽवस्थितः संभ्रान्त इव लक्ष्यते ।

यदि स धृतिमालम्ब्य मनाग्विक्रामेत्तर्हि चारित्रगुप्तिं विधास्यति। परमगतिकः स किं कुर्यात्। सति प्रसङ्गे धृतिस्तं जहाति। अतो मिथ्याटोपं कोऽपि दर्शयतु नाम, सहजस्वभावः प्रकटो भवितैव।

---

## कथा सप्तषष्ठी ( ६७ )।

### युवग्रीष्मपक्षिणोः।

अस्ति कश्चिद्युवा भूरिव्ययशीलः। तस्य पिता तस्मै बहुरायं रिक्थत्वेन दत्त्वा यमनगरातिथिर्बभूव। आत्तऋक्थः स उन्मादकद्रव्यसेवनैर्द्यूतेन वेशवाटे च तद्विधानां तुन्दपरिमृजानां दुर्वृत्तानां समाजे कात्स्न्येन तद्व्ययित्वा प्रक्षीणद्रव्योऽभवत्। एकदा स नदीरोधसि दीन इव बभ्राम। तदा सहस्यमासोऽभूत्, परं पुष्णश्चण्डोस्रैर्ग्रीष्मागम आबभासे। तत्रोद्भ्रान्तमेकं यदृच्छयागतं ग्रीष्मविष्किरं पाथसि तरन्तमैक्षिष्ट। ततो व्यसनप्रतिपादितोन्मादाय तस्मा अभात् "तपः सम्यक्प्रादुर्बभूवेति न मे संप्रति वाससा प्रयोजनम्" इति विचिन्त्योद्गमनीयमादधौ। आधित्वेन परिहितप्रावारस्य न्यासं कृत्वा तद्विनिमयेनार्थं गृहीत्वा भूयोऽपि द्यूतकृद्भिःस्वसखिभिर्देवितुमव्राजीत्। जितश्चासावक्षवत्याम्। ततो विगतवाससं तं हिममर्दयामास। विलक्षो नाम भूत्वा कूलंकषायास्तटे वव्राज। यावच्च तत्र पश्यति तावच्छीतातिरेकाच्छीनं जलमपश्यत्, तं चोष्मकविहायसमवश्यायसंहतगात्रं परेतं तीरदेशेऽधिजगाम। सर्वमेतदवगम्य स संज्ञां प्राप्य तं नगौकसं निनिन्द, उवाद च–रे पतत्रे, मूर्खोऽहं त्वां व्यश्वसिषम्। त्वमात्मानं प्रतार्य मामपि विप्रलेभिषे।"



नीय

तात्पर्यम् ।

ये मादकद्रव्याणि सेवन्ते, द्यूतसभां वाश्रियन्ते, दुश्चरित्रसजुषो वा भवन्ति, परदाराभिमर्शिभिर्वा संगच्छन्ते, न तैर्विमर्षितव्यं कथमञ्जसा नो विभवः संक्षयमुपागात्कथं च वयमेवमह्नाय शिथिलवसवः समजायामहि । ईदृशव्यसनपरायणा ये जायन्ते तेषां व्यसनातिप्रसक्त्याखिलविषयेष्वान्ध्यमुत्पद्यते। ये रात्रंदिवं व्ययासक्ताः संचितं व्ययीकुर्वन्ति, तस्मिन्व्ययिते व्ययार्थमधिक संगृह्णन्ति, अन्ते ऋणं कृत्वापि व्ययितव्यमिति येषां दृढा मतिस्तेषां निर्धनत्वमल्पो दण्डः । अन्य इव ते न पर्यालोचयन्ति । व्यसनग्रहाधिष्ठितास्तेऽखिलभावान्याथातथ्येन न पश्यन्ति यथा कामलारुजा ग्रस्तः कश्चिद्यत्र यत्र दृष्टिं पातयति तत्र तत्र सर्वं हरिद्राभं पश्यति । उपरितनप्रस्तावे निरूपितो युवेदृगनीदृग्विचारमीषदपि यद्यकरिष्यत्तर्हि निदाघः प्राप्त इति कृतधीरवशिष्टवसनानि नात्यक्ष्यत् । व्यसनासक्तस्त्वशुचावप्युष्णमपश्यद्धेमन्तोऽग्रे नागन्तेति निर्णीय परिधानांशुके अपि व्यक्रीणात् । विक्रयोऽपि किंहेतुकः ? देवनेन तल्लब्धद्रव्यव्ययकारणायैवासौ । ततो द्रविणं नष्टमाच्छादने अपि हारिते इत्युदीक्ष्य तस्याक्षिणी उन्मिषिते । परं किंफलोऽयमनुबोधः ?

---

## कथाष्टषष्टी ( ६८ ) ।

## कैवर्तानिमिषयोः ।

कश्चिद्धीवरो नद्यम्भसि पृथुरोमग्रहणार्थं बडिशमक्षैप्सीत् । तद्गृहीतमेकं झषमुद्धृत्य तस्मिन्स्वमत्स्याधान्यामस्यति

सति स वैसारिणस्तं प्रार्थयते स्म—"भोः पुण्यश्लोक, दयालुर्भूत्वा पुनर्मां धुन्यां क्षिप" । कैवर्तस्तमपृच्छत्—"कस्य हेतोस्त्वामित्थमुपकरोमि ? ब्रूष्व तावत् ।" विसारस्तं प्रतिब्रवीति—"अर्भकोऽहम्, अतस्ते वृद्धस्य मम यावानुपयोगो भवेन्न तावानद्य ।" दाशः प्रतिवदति—"ऋतमात्थ त्वम् । परं प्राप्तं विहायाप्राप्तबद्धाशो नाहमसमञ्जसः ।"

तात्पर्यम् ।

भाविलाभावलम्बी यो हस्तगतं वस्तु विजहाति स उभे अपि हारयति । अप्राप्तवस्तुबद्धस्पृहत्वं न दोषः, परं तल्लाभमवलम्ब्य करगतस्य त्यागो निर्वेदाय प्रायेण भवति ।

---

## कथा नवषष्टी ( ६९ ) ।

### मृगेन्द्रबालेयकृतपापर्द्धिः ।

कस्मिंश्चित्काले कोऽपि कण्ठीरवो मतिं व्यधत्त—"खरं सहायं कृत्वाखेटे व्याप्रियेय" इति । स चक्रीवन्तं निर्दिदेश—"भो रासभ, त्वं विटपिगुल्मान्तरितगात्रस्तिष्ठ, अमुकस्मिन्काले च भीत्युत्पादकं चीत्कारं कुरु । तस्मादारम्भाच्च मा विरंसीः । एवं त्वयानुष्ठिते सर्वे पशवो भियाक्रान्ताः पलायितुं प्रवर्तेरन् । अहं तु निर्गमपथं रोत्स्यामि । तेन मार्गेण गच्छतः सर्वान्रेषितास्मि ।" ततः खरेण यथानिर्देशं कृते द्रुतगतीन्धावतः पशून्निर्गममार्गस्थितः सिंहोऽश्रमेणैकैकमतृणेट् । यदेमानि पशुशवानि ममोदरपूर्तये पर्याप्तानीति सिंहो मेने तदा स गर्दभमाकार्याभ्यधात्—"भोश्चक्रीवन्, साधु साधु । साधु कृतं सखे, अत्यद्भुता ते चीत्कारेण । चिरम्

तावत् । इत एहि" इति । तमाह्वानमनु खरश्चित्रकायं प्रतिनिवृत्य "स्वनियोगः सुष्ठुशून्यः कृतः" इति मत्वा तं सलीलं पृच्छति– "भो मृगाधिप, यदहं कृतवांस्तत्तुभ्यमरोचत न वा । " हर्यक्ष आह–"मतं तव कृत्यमिति किं कथयामि । अतीवाभिनन्दामि तत् । त्वमेवं व्यधा यत्त्वत्स्वरूपं नाहमज्ञास्यं यदि, तर्हि ते चीत्कारं श्रुत्वाहमप्यभेष्यम् ।"

तात्पर्यम् ।

केचिदयं गर्दभ इवानल्पं जल्पन्ति, प्रगल्भं विकत्थन्ते, अज्ञांश्च भाययन्ति । परंतु ये तत्स्वरूपं विजानन्ति तेषां त उच्चावचप्रलापाः केवलं कौतुकमावहन्ति । ईदृशः पुमांसो यत्र लभ्यन्ते तत्र तद्विषये स्निग्धं चर्चा कार्या । चर्चायां कृतायां न ते भयस्थानानीति व्यक्तिर्भवेदेव ।

---

## कथा सप्तती ( ७० ) ।

## निपुणमतेश्चक्रीवतः ।

कस्मिंश्चित्स्थविरे रासभं चारयति तस्य परिपन्थी तमभिययौ । अतः स गर्दभं त्वरयामास । तस्मिन्काले चक्रीवांस्तं पप्रच्छ–"स्वामिन्, स तेऽरातिर्मे पृष्ठे भारं करिष्यति न वा?" प्रवया अवादीत्–"भारं त्वया वाहयिष्यत्येव, नात्र विसंवादः ।" खरः पुनरभिदधौ–"प्रभो, त्वं मया भारवाहनं कारयिष्यसि वा न वा?" वृद्धोऽवदत्–"किमहं न कारयिष्यामि ?भारोद्वहनं ते कर्मैव ।"बालेय आह–"यद्येवं तर्ह्यहमङ्गुलमात्रमपि न प्रचलिष्यामि । यदि भारोद्वहनकर्मणोऽहं न मुञ्चे, कोऽपि मे स्वामी भवतु । किं मे हर्षपदं शोकस्थानं वा?"

### तात्पर्यम् ।

रंका राज्यपरिवर्तनाभ्युपायेषु मतिं न कुर्युः । यदि ते व्याप्रियन्ते महद्व्यसनं तानुपैति । राजपरिवर्तनाद्राजनामभेदान्नान्यो लाभस्तेषाम् । न तेऽनेन निर्धनतराः संपद्यन्ते, न वाधिकं कर्माणि कार्यन्ते । एवं विद्यमाने केचित्स्वार्थसंपादकाः पुरुषास्तेषु मानमुत्पाद्य तान्कपटप्रयोगैः प्रजाक्षोभं निर्माय राजयुद्धेऽनुबध्नन्ति । तस्मिन्कलहे सिद्धे न ते किंचिदपि लभन्ते, परमसिद्धे वध्या भवन्ति ।

---

## कथैकसप्तती ( ७१ ) ।

### कत्थनशीलस्याध्वन्यस्य ।

कश्चित्पुरुषश्चिरभ्रान्तभूवलयः स्वं पुरं न्यवर्तत । स देशान्तरेषु यानि कौतुकानि ददर्श तानि तानि संस्तुतजनेभ्योऽयथातथं वर्णयामास । कथाप्रसङ्गेनानर्थभाषी सः "अलकापुरीं गतोऽस्मि । तत्रत्याः पञ्चदशहस्तानुत्पतन्ति, परंतु यदा मया सह ते पणं चक्रुस्तदाहमिव न कोऽप्युदपप्तत्" इति जजल्प । संनिधस्था जनास्तु नेदं परमार्थेन जगृहुः । तद्दृष्ट्वा स तान्प्रत्याययितुं बहूञ्शपथानकरोत्, सत्यवाक्यानि च दृढीकरणार्थं युयोज । अत्रान्तरे तेषामेको वदति—"आर्य; किमिति कृच्छ्र आत्मानं पातयसि? प्रकोष्ठे धृतस्य परिहार्यस्य ज्ञाने किमादर्शस्य प्रयोजनम्? किमित्यसभ्यमधुना प्रत्यक्षं न निदर्शयसि? अलकापूःस्थितमात्मानं भावय । यथा च तत्रोदपप्तस्तथा भूयोऽप्यत्र किं नोत्पतसि?" विकत्थनपराय तन्नारुचत । ततः स विलक्षो भूत्वा तूष्णीं बभूव ।

## तात्पर्यम् ।

ये देशान्तरप्रवासिनो ये वाऽदृष्टदेशान्तरास्ते सर्वे स्वीयो गुणो यस्मिन्प्रख्याप्यते तां वार्तां स्वमुखेन न वदेयुः, स्वयं प्रख्यापितमात्मनः स्तुत्यर्हमपि गुणं लोका न श्रद्दधति । उक्तं च—"इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ।" ततो यथा यथा वयं शपथान्सत्यंकारान्वा प्रयुञ्ज्मः, तथा तथा तेऽधिकं संशेरते । तत्त्वकथनेऽप्येवं भवति, किं पुनः स्वगुणप्रख्यापनायायथार्थकथने भवतीति वक्तव्यम्? ये समाजेषु देशान्तरसंबन्धिनीरयथार्थाः कथाः कुर्वन्ति, तेऽनृतवादिन इति सपदि ज्ञायते लोकैः । कदाचित्तस्यां संसदि तद्देशद्रष्टा कोऽपि भवेद्यः सद्योऽवितथभाषणदोषं भावयेत् ।

---

## कथा द्वासप्तती ( ७२ ) ।

### भ्रात्रोः ।

कस्यापि पुंसो द्वावल्पवयस्कौ माणवकावास्ताम् । तयोरेकः पुत्रोऽन्या च कन्या । सूनुराकारसंपदा कन्यामतिशिश्ये, या नातिसुभगासीत् । कस्मिंश्चिदहनि मुकुरं निकषा क्रिडतोस्तयोः पुत्रः स्वसारमाह—"अये, पश्यावास्मिन्दर्पणे कतर आवयोः सुन्दरतरो दृश्यते" इति । अनेन सा कन्या दुर्मनायिता । सा "मामधिक्षेप्तुमयमिदमब्रूत,' इत्यज्ञासीत् । अथ सा पितरं गत्वा भ्रातृकृतामाक्षारणां तस्मायवेदयत् । साब्रवीत्—"पितः, आदर्शे स्वं रूपं दृष्ट्वा मनःसमाधानं स्त्रीणां कर्म । अस्मिन्कर्मणि पुमान्मतिं विधातुं नार्हति" । पितोभावप्यश्लिक्षत्तौ समादधौ । आह च—"बालौ, मा कलहं कुर्षाथाम् । अद्यप्र-

भत्युभावप्यजस्रं मुकुरे पश्यतम् । पुत्रक, ईदृशमभिरामं ते लपनं दुर्गुणैर्मलीमसं भवति चेत्त्वं ज्ञास्यसि । वासु, तव रूपे या न्यूनता सा गुणैः पूर्णा न वेति च त्वं ज्ञास्यसि" इति ।

तात्पर्यम् ।

नास्त्येतादृग्वस्त्वस्मिञ्जगति यस्मिन्निपुणं विचार्यापि न किमपि वैगुण्यं दृश्यम् । अत एव बुद्धिमादर्शतां नीत्वा तत्रानवरतं गुणानवगुणांश्च परीक्षमाणस्य हितमेव भवति । इदं न केवलं बालैर्वृद्धैरपि कर्तव्यम् । यो दम्भी सोऽवयवसौष्ठवमादर्शे पश्यतु, परंतु स निध्यायेत् यथाहं बाह्यतो निर्दोषस्तथापि नामाहमन्तरङ्गे ? माराभिरामोऽपि पुरुषोऽन्तरङ्गगुणहीनो यदि, जनानामप्रियो भवति, स एव यदि मधुरभाषी सुशीलोऽन्यैश्च गुणैरन्वितो भवेल्लोकप्रियो भवति । यः सुरूपः स गुणैर्विहीनः सन्निष्प्रयोजनः । किंतु यो गुणी स रूपेण कथमपि भवतु, तस्य रूपे जना अनादराः । दीप्तिमानपि प्रस्तरो रत्नस्य षोडशीमपि कलां किमर्हति । यद्यपि बाह्यतो दुर्दर्शनस्तथाप्याभ्यन्तरमूल्यवान्मणिरेवासौ । तथैव योऽन्तः साधुः यस्य शेमुषी प्रसन्ना, क्रियायां यस्य वैशद्यम्, मनस आर्जवम्, धियाः प्रभावश्च स रूपं नापेक्षते ।

---

## कथा त्रिसप्तती ( ७३ ) ।

## निर्णेजकाङ्गारविक्रेत्रोः ।

कश्चिदङ्गारविक्रेता कस्यांचित्पुरि व्यवहारनिमित्तेनावा-

---

१. बाले.

त्सीत्। तत्र तद्ग्रामवासिना केनचिद्रजकेन समापेदे । तावन्योन्यं कुशलं पृष्ट्वा वसतिस्थाने पप्रच्छतुः। अथाङ्गारविक्रयिको निर्णेजकमाह—"न यथोचिता ते निवासभूमिः, अतो वासमङ्गीकृत्य सनाथीक्रियतां ममावासः।" रजकस्तमाह—"सखे, कथमस्य संभवः? त्वत्संनिधाने वासे रचिते मया, यद्वासः प्रातरहं निर्णेनेज्मि तदजातस्पष्टायां संध्यायामेव तवाङ्गाररजोऽसितवर्णं कुर्यात्।"

तात्पर्यम्।

इह कस्यापि साहचर्ये कर्तव्ये स्निग्धं निध्यायताकर्तव्यम्। गुणिनामपि नो गुणान्गुणहीनसंगतिर्मज्जयति। अतो यो विवेकी यश्चात्मनः श्रेय इच्छेत्स दुर्जनान्परिहरेत्। तस्य सङ्गो हि समूलं नाशयति। तेन संगता वयं तस्य दोषैरलिप्ता अपि यदि भवेम, न जना एवं ज्ञास्यन्ति। तस्य सङ्गेन तस्य मन्तव आत्मनो गुणाश्चैवं संकीर्येरन्, यथा को दोषभाक्कोऽनवद्य इति परिच्छेत्तुं जना न श्राम्येयुः। समज्ञाच्छनिर्झरोपमास्ति। यथा प्रसन्नमपि जलं ग्रामोपान्तवर्तिभिः पङ्किलस्रोतोभिः संगतं चेदाविलं भवति, तथा दुर्जनसहवासेन यशः कालुष्यमुपयाति।

---

## कथा चतुःसप्तती ( ७४ )।

### क्रोष्टूपमुखयोः।

कस्यांचिच्छर्वर्यां कोऽपि क्रोष्टा कस्यचित्कृत्रिममुखविक्रेतुः पण्यशालामविक्षत्। छद्ममुखप्रचुरायां तस्यामेकतमेस्मिं छद्मास्ये पदं निधायैकतानतया निरूपयन्निदमूचे—"सुन्दरमिदं शिरः, परं मस्तिष्करहितम्, अतो विनोदमात्रोपयोगि।"

तात्पर्यम् ।

नास्ति यस्य प्रज्ञा तस्य चारुता निरर्था ।

## कथा पञ्चसप्तती ( ७५ )।

### वर्षाभ्वोः ।

कस्मिंश्चिदत्युष्णे ग्रीष्मसमये पङ्कशेषाणि सरांसि समजायन्त, तथा च निर्निष्यन्दाः प्रह्योऽन्ये जलाशयाश्च शुष्कतोयाः संजज्ञिरे । तस्मिन्काले कौचिद्वर्षाभ्वावपोऽन्विष्यन्तौ कांचिदगाधां वापीमासेदतुः । तटदेशभाजौ तौ मिथो मन्त्रयांचक्राते—"किमावामवप्लवावहै न वा ।" एको वदति—"अवतरावास्याम्, यतोऽगाधेऽस्मिन्कूपे बहुभिरुत्सैर्भाव्यम्, न किमपि परिहास्यतेऽत्र ।" अपरस्तं वदति—"रे, यत्त्वं वक्षि तद्दतं स्यात्तथापि साहसमिदम्, अतस्त्वद्वचो नानुमन्वे । कुत इति चेत्, यद्यस्य कूपस्य मध्यगता आपः शुष्येयुस्तर्हि कथय कथं निर्गच्छावास्मात् ।"

तात्पर्यम् ।

संशयारोहणात्प्रागसिद्धे तत्कार्येऽमुकेनोपायेन स्वरक्षा भवेदिति विमृशेत् ।

## कथा षट्सप्तती ( ७६ )।

### कदर्यस्य । मितौ

कश्चिन्मितंपचो बहुधनं संचित्य वप्रे निचखान । स तमुद्देशमेकवारं द्विवारं वा दिनेऽश्रान्तमियाय निखातद्रव्यां तां गर्तां दृष्ट्वा जह्लादे । तत्तस्य कृत्यं तस्य दासेरो विलोक्य शशङ्के यदयं मत्स्वामीमं देशमागत्याविरतं पश्यति, तस्मा-

त्कोऽपि विशेषोऽत्र विद्येतेति । अथ स क्षणदायां तत्र गत्वा खनित्वापश्यत् । तदानीं निधिमधिगम्य तं गृहीत्वापाक्रमीत् । उत्तरेद्युः स किंपचानो नित्यक्रमेणागम्य पश्यन्निधेरदर्शनमुपलब्धवान् । उपलब्धे निधिनाशे रजोरूषितमूर्धजः स सोरस्ताडम् "कष्टम्, हा हन्त" इति मुक्तकण्ठमाचक्रन्द । गृहान्न निववृते । अन्ते तस्य प्रातिवेश्यस्तमुपेत्य तं शोकहेतुं पप्रच्छ । क्षुद्रस्तस्मै प्रवृत्तिमाचख्यौ । तच्छ्रुत्वा प्रतिवेशी तं व्याहार्षीत्—"भद्र, न ते किमपि नष्टमित्यवगच्छामि । मे द्रव्यनाशः समुत्पन्न इति चित्ते मा कुरु । यथापूर्वं चैनमवटमनिशं प्रेक्षस्व एवमनुष्ठिते सिद्धं ते समीहितम् ।"

तात्पर्यम् ।

ये कृपणास्ते सत्यपि रायि दरिद्रा एव । ते संचितद्रव्यमनुपभुज्य वर्धनेच्छयामरणादाभीलान्यनुभूय नानाविधानि पापान्याचरन्ति । अन्ततस्तेषां विभवमैकागारिकादयो हरन्ति । ते जीवन्तो दुःखशोकयोर्भाजनम् । मरणोत्तरं चाक्षय्यो निरयवासस्तेषाम् ।

---

## कथा सप्तसप्तती ( ७७ ) ।

### गरुडीवराह्याखुभुजाम् ।

काचिद्गरुडी कस्यांचिदुच्छ्रायिणि पलाशिनि शिखरशाखायां नीडं निरमास्त । तस्यैव विटपिनो मध्यवर्तिनि कोटरे काचिद्वृषदंशकोवास । कापि वनसूकरी च तस्यैव शाखिनो बुध्नगते कुहरे डिम्भैः सहावसत् । यदि ते उभे पिशुनायास्तस्या बिडाल्याः परिवादं नाश्रोष्यतां तर्हि सुखं चिरम-

त्रायान्योन्यस्य सामन्तेऽवत्स्यताम् । एकदा सौतुः प्रथमं गरुत्मतीमुदगच्छत्, तां प्रति चोवाच—"प्रतिवासिनि, किं कथये ? महाननर्थो नः समापतितः । एषा पापाशया वराही नक्तंदिनं महीरुहमूलस्याधस्तादविरतं खनति । सैवं मन्यते यद्ययं कुटः पतिष्यति, अमुयोः शिशव आयासानकृत्वात्मसाद्भविष्यन्तीति । अहं यत्प्राप्तकालं तत्कुर्वे । त्वमपि यत्ते पथ्यं तत्कुरुष्व ।" एवं गरुड्या हृदि भयं जनयित्वा तस्या अगोचरेण निभृतं सा मार्जारी कोलीमपागच्छत् । विवर्णास्या च तां प्रति ब्रूते—"कच्चिद्भवती बहिर्यास्यत्यद्य ?" पोत्रिण्याह—"किमितीयं पृच्छा ?" आखुभुग्जगाद—"नहि किमपि । अबुद्धिपूर्वोऽयमनुयोगः । यथाकामं कुरु तावत्परमहं गरुडीं सपृथुकांश्चक्षाणामशृणवं घोणिन्यां बहिर्गतायां तस्याश्च मार्जार्यांश्च यथावसरं पोताभ्यवहारेण युष्मांस्तर्पयेयमिति सहसाहमेतदाकर्णयम् । साधयामि तर्हि । मे पाका एकाकिनः शेरते निष्कुहे । तेषां त्राणमवश्यं कार्यं मया ।" एतावदुक्त्वा सोदपप्तत्स्वार्भकानुपेयाय तानत्रायत । एवं साचिरेणाकरोद्दोषा बहिर्गूढं यात्वा खाद्यमानयत् । दिवा च शावकत्राणपरा नाम भूत्वा उपर्यधश्च साशङ्कं मुहुरवालुलोकत् । इदं तस्याश्चरितं दृष्ट्वा गरुडीक्रोड्योर्मनसी निविष्टान्योन्यद्वेषे अभूताम् । ततस्ते इतरेतरस्य भीत्या स्वस्वस्थलान्न निर्जग्मतुः । अस्यायमुदर्कः समपादि यत्ते शिशुभिः सत्रा जग्ध्यभावेन कालधर्ममापेदाते । तत्कुणपैस्तस्या आखुभुजोऽन्नसमृद्धिरभूत् ।

## तात्पर्यम् ।

पिशुनैरिह महान्तोऽनर्था अक्रुषत । ते कतिषु साधुकुलेष्वा निधनमसंजातसंधानां वैरबुद्धिं जनयामासुः । कतिपयानां मनःसु चिरादप्यनुमृष्टान्विकल्पानुत्पादयामासुः । अनेकांस्तथा परिक्षीणसंपदोऽकार्षुर्यथा न पुनस्तैरासादितं धनम् । यः पूरुषः प्रतिवेशिकधर्मेण वर्तितुमिच्छति स कस्यापि वचनमात्रं प्रतीत्य न सामन्ताय द्रुह्येत् । जनश्रुतिमनुरुध्य वितर्केभ्योऽवसरं दत्त्वा स्वमतं नैव प्रकाशयेत् । यतो यत्पुरतो मतप्रकाशं कुर्मः स खलश्चेद्वाक्प्रपञ्चेनाल्पायामप्यसदुक्त्यां वहुभाषित्वमध्यारोपयति । यः सज्जनस्तस्मै कोऽपि कस्यापि किमपि कथयतु, सोऽखिलं हृदये करोति, एकस्यान्यस्मै नाचष्टे । तस्य सांदृष्टिकमिदमेव स उभयोरपि प्रियो भवति । जात्वमित्राण्यपि तद्द्वारा मित्राणि भवन्ति । तद्विधस्य पुंसश्चेतोऽनेन किमुत हृष्येत् ?

---

## कथाष्टसप्तती ( ७८ ) ।

### अजसिंहयोः ।

कश्चित्केसरी कंचन शुभमद्रेर्नितम्बदेशे चरन्तमपश्यत् । तत्र नास्ति मे गतिरिति ज्ञात्वा हरिस्तं ललाप—"रे, त्वमीदृशि विषमे स्थाने सर्वाह्णं चरित्वा किं सुखं लभसे । उत्प्लुत्योत्प्लुत्य कदाचिद्यदि पतिष्यसि प्राणांस्त्यक्ष्यसि । वरं तर्हि ते नीचैरागमनम् । शाद्वलगतानिमान्कोमलशाद्वान्मधुराणि चेमानि गुल्मिनीच्छदनान्यद्धि ।" छागोऽवदत्—"तवोक्तिः सर्वथानृता । परं त्वं मे बुभुक्षित इव भासि, अतस्त्वया-

धिष्ठितस्थलमागत्य नास्मि जीवितं संशयितं करोमि ।"

तात्पर्यम् ।

ये स्वार्थपरा जिह्माश्च तैः कथितं सत्यत्वेनाप्यवभासमानं हितं न विश्वस्यात् । तत्र दम्भमवश्यं जानीयात् ।

---

## कथा नवसप्तती ( ७९ ) ।

### भेकहर्योः ।

कश्चित्पञ्चास्यः किमपि सर उदन्यापोहनाय प्राप्नोत् । तत्र वर्तमानस्य कस्यचिद्वर्षाभ्वो रटनं श्रुत्वा बिभाय । परितो विलोक्य स्वगतं गदति—"किमिदम् । न कोऽप्यत्र दृग्गोचरः, रावश्चाभीक्ष्णं श्रूयते ।" ततो भयेन विवेपे । परं धैर्यमवलम्ब्यानपद्रुत्य स्थित एव ध्यायति तस्मिन्सरसो निष्क्रम्य स एव वर्षाभूरुच्चै रटन्नुत्पपात । दृष्टे च तस्मिन्वर्षाभ्वि कण्ठीरवश्चुक्रोध—"ईदृशोऽल्पकायो जन्युर्भूत्वा मद्विधमुदवेजयत्" इति । ततः द्रावक्तं वर्षाभ्वमुपगम्य पादप्रहारेणामृद्नात् ।

तात्पर्यम् ।

प्रायोऽस्थाने भीरस्मानुपैति । येऽविवेकिनो मूढाश्च तानेव भयानि दुन्वन्ति । यश्च विवेकी धीरश्च स तेषां कारणमन्विष्यति । ततः स जानाति भिया मूलं मन एवेति ।

---

## कथाशीती ( ८० ) ।

### शालकण्टकगुल्मयोः ।

कस्मिंश्चिद्वनमध्ये समरेखः कश्चिच्छालो महोच्छ्रयमव-

र्धत । सोऽनारतमात्मोत्सेधावलिप्तो नीचै रोहतो वृक्षकान्धिक्चकार । तद्वृक्षकमध्यगतः कश्चित्कण्टकस्तम्बस्तन्न मर्षित्वेतरेद्युस्तं सालं पृष्टवान्—"किं भोः, महान्तं गर्वं वहसि ? ब्रूहि तावत् ।" स उत्तरयति—"सर्वपादपेषु श्रेष्ठोऽहम्, ललितश्च मे शिखरो नभो विलङ्घयति । मे स्कन्धशाखाः सततं हरितायन्ते । यूयं त्वतीव नीचाः यो य आगच्छति स स वश्चरणैरवताडयति । मम पलाशस्थितार्णःपृषतामासारैरेव यूयं मज्जथ ।" गोक्षुर आह—"अस्त्वेतत्, परं परमार्थेन गृह्यतां मे वचः । यदा कश्चिदाटविकस्तेऽङ्घ्रौ प्रहर्तुमायास्यति तदास्माकं मध्याद्योऽपकृष्टो द्रुस्तेन साकं महता तोषेण महत्त्वविनिमयं कर्तुमेषितासि ।"

तात्पर्यम् ।

महान्तो नैकैरुपाधिभिः परिव्रियन्ते । न तावत्क्षुद्रान्परिवृण्वन्ति । अतः पृथग्जनानां महतां च सुखदुःखयोस्तुलनायां कृतायां महत्त्वमेव वरमिति वक्तुं दुष्करम् । एवंस्थिते उपपदैर्जनुषा वा ये महान्तो भूतास्तैरवलेपेन परामृष्टैः सद्भिर्विवर्णानां न्यक्करणं कियान्मोहः ?

---

## कथैकाशीती ( ८१ ) ।

### बस्तोक्ष्णोः ।

सिंहानुयातः कश्चिदुक्षा प्राणपरीप्सया धावन्कांचिद्गुहां विविक्षुस्तद्गतेनैकेन च्छगलकेन न्यवार्यत । स प्राह स—"मामकमिदं निशान्तमन्तः प्रवेक्ष्यसि यदि तर्ह्यहं प्रहरिष्यामि त्वा ।" गौर्बद्धाञ्जलिरनुनिनाय— "भो अज, सिंहः पश्चान्मे

वर्तते । शरणागतस्य समाश्रय एव ते गृहमेधिन उचितो धर्मः ।" छागस्तन्नावदधे । विषाणे संमुखीकृत्य प्रार्थयते स तम् । तदासौ सौरभेयस्तं वदति—"नाहं त्वत्तस्त्वच्छृङ्गाभ्यां वा बिभेमि । परं किं करवाणि ? यदि सिंहो मम पश्चान्नावर्त्स्यत्, तर्हि भद्रशुभयोः कियदन्तरमिति मह्यं तेऽदर्शयिष्यम् ।"

तात्पर्यम् ।

व्यसनस्थस्यासाहाय्यं न मानुषयोग्यम् । तत्साहाय्यमकृत्वा तस्य न्यक्कारस्तस्य पीडनं वा तस्य दुःखस्य नवीकरणं वा क्रियते । किमन्यदनार्याचरितम् ?

---

## कथा द्व्यशीती ( ८२ )।

### विष्किरशाकुनिकयोः ।

पक्षिबन्धनार्थं वीतंसं निर्मित्सुं शाकुनिकं निकटस्थानोकहगतः कश्चिद्विरपृच्छत्—"आर्य, किमिदं निर्मीयते ?" शाकुनिक आह—"नभसङ्गमानां वः कृते पत्तनं निर्मिमे । ये पतत्रयोऽत्रागत्य वत्स्यन्ति, त आहारविहारेषु न किंचिदपि क्लिश्यन्ति । अत्र तृणमस्ति, आपः सन्ति, वस्तुं नानाविधाः शालाः सन्ति, संवेशार्थं मृदून्युष्णानि च शयनीयान्यत्र विद्यन्ते, वरस्त्रियश्चापि वर्तन्तेऽत्र ।" स विष्किरः सर्वमेतत्सत्यत्वेनाग्रहीत् । ततो वीतंसं निर्माय गते तस्मिञ्जीवान्तके स तद्विवेश । संयतः सन्नक्लिश्नात् । ततः स तत्रायातान्वाजिनोऽचकथत्—"भोः, मा प्रमाद्यत । पाशोऽयम् । कैतवेनास्मि धृतः । स दग्धजीवन्तिको वो भ्रमयेत् । तं मा विश्वसित । अखिलांश्च गरुत्मत इममुदन्तमुद्घोषयत ।"

त्रिभिश्चतुर्भिर्वा मुहूर्तैर्लुब्धकस्तत्राजगाम । तं स नीडोद्भव आह–"रे शठ, मां तु त्वं वञ्चयामासिथ परंतु दृढमवेहि । अस्मिंस्ते रम्यस्थले न कोऽपि पक्षीतः परमायाता ।

तात्पर्यम् ।

ये धूर्तास्ते यावत्तेषां स्वरूपमज्ञातं तावल्लोकान्विप्रलभन्ते । सकृत्तेषां स्वरूपे साकल्येन ज्ञाते जनास्तान्दूरतः परिहरन्ति ।

---

## कथा त्र्यशीती ( ८३ ) ।

### राजपण्डितयोः ।

कश्चिद्राजा नवमाक्रीडं निर्ममे । स कस्मिंश्चिदुत्सवदिने तत्र विहर्तुमिष्टाप्तसुहृद्भिरनुजीविभिश्चान्वितो जगाम । तत्र भक्ष्यभोज्यलेह्यचोष्यपेयानि परमान्नान्यास्वाद्यास्वाद्य तौर्यत्रिकादिरागपूरितमानसश्चिरमतिष्ठत् । एवमानन्दपूरनिमग्नेषु सर्वेषु स दिवसोऽविदितगतयामो व्यरंसीत् । ततो राजा प्रीतः सन्रसेन सर्वानूचे–"भो इष्टाप्तसुहृज्जनाः, यस्तरुर्यस्मै रोचते स तेन मदीयोऽयं भवत्विति निःशङ्कं वाच्यम् ।" तद्राज्ञो वचोऽभिनन्द्य कश्चिदाह–"कुमारी मदीयास्तु ।" अपरः कश्चिदाह–"अतिमुक्तो मम भवतु ।" अन्यः कश्चिदाह–"नवमालिका मे रोचते ।" कश्चनापरः "पाटलाप्रियोऽहम्" इत्युवाच । कश्चिदन्यः "चाम्पेयो मे प्रियः" इति एवमवकेशिनः कुटाः सर्वेभ्योऽरोचिषतेति दृष्ट्वा राज्ञोऽभ्यासे वर्तमानः पण्डितो विस्मितमात्मानं दर्शयञ्जगाद–"यथारुचि भवन्तो वदन्तु, नारीकेलो ममास्तु यः फलैर्देवानः प्रीणयति

यश्च सर्वोपयोगी ।" निशम्यादो राजा सशिरःकम्पं ब्रूते-"साधु विद्वन्, साधु । अत एव जना आर्यमिश्रान्विपश्चितः सभारत्नानीति वदन्ति । सत्यमेव तद्यदुपयोगं विना व्यर्थं। दम्भार्थं कस्यचिदङ्गीकारोऽप्रज्ञत्वम् ।"

तात्पर्यम् ।

यत्कार्यं तत्केवलं दम्भार्थं न कुर्वीत । यं वयमाश्रितं कुर्मः कस्तस्योपयोगो भवेदिति चिन्तनीयम् । केवलमाकारपक्षपातिभिर्न भाव्यम् ।

---

## कथा चतुरशीती ( ८४ ) ।

### श्वभीरुकण्टकतर्वोः ।

कश्चित्कश्वा मृगदंशकेभ्यः संतत्रसे, द्रुतगत्या विचचाल च । कांचिद्वृतिमुल्लङ्घयंस्तद्गतमेकं कण्टकिनं तरुं जग्राह । संमुखीनपादयोः पूर्वकाये च तद्गतैः कण्टकैः क्षतो रुद्धगतिरासीत् । तदा कण्टकिनि शाखिनि वाक्पारुष्यं विधास्यन्नाह—"रे पामर, असांप्रतमिदं यत्त्वां शिश्रयिषौ त्वत्सकाशमुपगते मयि शाठ्यमाचरसि ।" कण्टकी द्रुमस्तं प्रतिवदति—"किं भोः, अहमेनं प्रमथ्नामि नानेन किमपि भाषितव्यम् । यदहं करोमि तत्सर्वमनेन विषह्यमिति ते मनसि किम् ? निबोध तर्हि, अद्यप्रभृति प्रसभग्रहोऽस्माकमधिकारः। अतोऽतःपरं कण्टकिनः पादपान्सर्वथा वर्जयेः,मा तान्स्प्राक्षीः'

तात्पर्यम् ।

दुर्जना अन्यान्दोतुं प्रक्रमन्ते । परं ते तेभ्यो बलवत्तरा भवेयुर्यदि तर्हि तानेव विपदि पातयन्ति । ततस्ते खलास्ते-

नुपालभन्ते, ब्रुवन्ति च–"किमेभिरस्मास्वनया वृत्त्या वर्तितव्यम्? युक्तं किमेषाम्?" परं ते चित्ते न कुर्वन्ति। अनागसो बाधमानानस्मान्न जनस्तृणेढीति तेषां महानुपकार एवेति।

---

## कथा पञ्चाशीती ( ८५ )।

### ओत्वाख्वोः।

किमपि निकेतनमदभ्राधोगन्तृभिरुपसृष्टं बभूव। तत्र कश्चिन्मार्जारोऽभ्यागात्। स बहूनुन्दुरानवधीत्। अन्येद्युर्विरलीकृतसंख्यैर्हतशिष्टैर्वृकैः समेत्य निरचायि, न कोऽप्यवतरेदिति। ततःप्रभृति बिडालो मूषकान्नालब्ध। ततोऽलब्धजग्धिः स मार्जारो मुमूर्षुः प्रायोपवेशनकृतमतिः कस्यामपि विहङ्गिकायां पूर्वपश्चिमपादानासज्य मृतवदात्मानं संदर्शयामास। तद्वीक्ष्य कश्चिज्जरठः पुंध्वजस्तं ब्रवीति–"सौम्यं, भारयष्टिमालम्ब्य सुखं तिष्ठ। किमनेन? विदारितं त उदरं तृणैः पूरितमिति दृष्टेऽपि वयं त्वां न विश्वसिमः।"

### तात्पर्यम्।

घातुकानां च धूर्तानां च चाटानां च चाटूक्तीरजिह्मवद्वभासमानानि कर्माणि वा जना याथार्थ्येन गृह्णन्ति, अत एव वञ्च्यन्ते। यदा तेषां स्वरूपमेकवारं ज्ञायते, ते वञ्चका इति च दृढनिश्चयो यैः क्रियते, तेषां वञ्चने कियती मात्रा तेषाम्?

## कथा षडशीती ( ८६ )।

### किखिग्राम्ययोः ।

कश्चित्क्रोष्टा व्याधैरनुसृतो द्रुतं धावञ्शश्राम । अत्रान्तरे पथि स्थितं कंचिद्ग्रामीणं दृष्ट्वा तं प्रार्थयामास–"तव कुटीरे वासं देहि" इति । ग्राम्योऽब्रवीत्–"परमम्" इति । ततः स क्रोष्टा तत्कुटीरैककोणे जुगूहात्मानम् । व्याधास्तस्यानुपदमेवाजग्मुः । तैर्ग्राम्योऽप्रच्छि–"कच्चिदितो यान्तं क्रोष्टारं ददर्शिथ ।" ग्राम्य उवाच–"न हि दृष्टो मया । एवं वाङ्मात्रेण नेति भावयामास, परं तस्य निह्नवस्थानं वारं-वारमङ्गुल्या निरदिक्षत् । अपरिज्ञातहस्तसंज्ञा मृगयवो निर्जग्मुः । अथ सा शिवा निभृतं गन्तुं प्रचक्रमे । एतस्मिन्नन्तरे ग्राम्यस्तां पृच्छति–"अये, किमेषा रीतिः ? येन तेऽभयं दत्तं तमनापृच्छ्यैव गम्यते किम् ?" क्रोष्ट्रा सर्वास्तस्य चेष्टाः सूक्ष्मच्छेदतोऽदर्शिषत । ता मनसि निधाय स ब्रवीति–"रे, वचनानुकारि यदि ते कर्माभविष्यत्तर्हि तवोपकृतेरानृण्यं नूनमगमिष्यम् ।

तात्पर्यम् ।

केचिदेवंविधा अधमाः सन्ति, यत्ते प्रत्यक्षे वचनैराप्तत्वमुपन्यस्यन्ति । परोक्षे कार्यं विहन्तुं यतन्ते । प्रकाशसपत्नो वरम् । परं मित्रोपदेशेन यो द्विषः कर्माचरति स हितशत्रुरसत्यसंधोऽतीव नीचः । तस्य मुखं नावलोकनीयम् ।

---

## कथा सप्ताशीती ( ८७ )।

### शुना दष्टस्य पुंसः ।

कंचन पुमांसं कोऽपि श्वादाङ्क्षीत् । काचिन्महत्तरी तस्मा

उपचारमकथयत्—"अपूपखण्डं गृहीत्वा स्पृष्टक्षतं तं श्वानमाशय" इति । एवं कृते विषबाधा नंष्टा । यथोक्तमनुतिष्ठन्तं तं कश्चिद्बुधोऽयनेन तेन गच्छन्दृष्ट्वा पप्रच्छ—"रे किमिदमारब्धं त्वया ? क्षतो यथावदाचख्यौ । श्रुत्वा तत्स विद्वांस्तं वदति—"रे, यद्येवं तर्हि प्रार्थयेऽहं रह एतत्कुरु । इमां प्रवृत्तिं यदि पत्तननिवासिनः श्वानः श्रोष्यन्ति, तर्ह्यस्यां पुर्यां कमप्यक्षतं नावशेक्ष्यन्ति ।"

तात्पर्यम् ।

एनस्विनो दण्डमेवार्हन्ति तदकृत्वा ये तेभ्यो बिभ्यति तांश्च मधुरवचोभिः सान्त्वयन्ति तैस्तत्सभाजनं रहस्येव कर्तव्यम् । नोचेत्साधूनां मानहानिर्दुरात्मनामुत्कर्षश्च भवेत् ।

---

## कथाष्टाशीती ( ८८ ) ।

### शिशुनियत्योः ।

कश्चिद्बालः कस्याश्चिद्दीर्घिकायास्तटे संविवेश । निद्रानिमीलितचक्षुषं तं विलोक्य विधिस्तं प्राबोधयत्, अवोचच्च —"रे, यदि पतिष्यसि तर्हि—तवापराध इति जना न वदिष्यन्ति । मामेव निन्दिष्यन्ति ।"

तात्पर्यम् ।

जनानां रीतिरेवेदृशी । यदि काचित्क्रिया शुभोदर्का भवेत्तर्हि वदन्ति मया कृतेति । व्यत्यये तु दैवमुपालभन्ते, न च स्वकर्म दूषयन्ति ।

---

## कथा नवाशीती ( ८९ )।

### अश्वतरस्य ।

कश्चिदश्वतरः स्वाशितो नातिपरिश्रमश्चासीत् । अतः सोऽल्पीयसानेहसा हृष्टपुष्टाङ्गोऽभवत्, स्वैरमुदपतच्च । कश्चित्तं चरुये–"रे, अश्वसंततिस्त्वम् । सोऽपि कीदृशो वाहः, न सामान्यः, अपि त्वाजानेयोऽश्वचर्यासु जिष्णुश्च ।" तद्धृदि निधाय स वेशरो निरचैषीत्–"प्रसङ्गवशान्महान्तमध्वानं लङ्घयेयम्" इति । व्यतीतेषु केषुचिद्दिनेषु तस्य स्वामी तमारुह्यैकदा कुत्रचिद्गुरुकार्यसंपादनाय गच्छंस्तेन जवेन धावितव्यमिति तं कशया वलवदभिजघान । तदा सोऽश्वतरो वर्त्मातिक्रमणपरोऽश्रमत् । तत आत्मन्यवज्ञां चकार–"रे, केदानीं तेऽश्ववीर्यम् ? व्यक्तमस्मान्न ते जनयिता वाजी, अपि तु रासभ एव ।"

### तात्पर्यम् ।

ये पित्रोरात्मनि महत्त्वमापादयन्ति तेषां खराणां च नो विशेषः । यः किल श्रेष्ठः स स्वार्जितयशःसंपदैव विश्रुतो भवति । यश्च स्वयमविक्रान्तः स एव पितृयशसा श्रेष्ठो भवितुमीहते । तत्करणे वितथप्रयत्नो भूत्वा लघुतां याति ।

---

## कथा नवती ( ९० )।

### कीशजम्बूकयोः ।

पुरा सर्वे पशवः शाखामृगं श्वापदराज्येऽभिषिषिचुः । प्राप्ते तु पश्वाधिराज्ये स कार्यविचक्षणोऽहं नीतिकुशलोऽहमिति मुधा दर्शयांबभूव । तत्पशूनामसमञ्जसं कृतमव-

लोक्य क्रोष्टुर्मनो विव्यथे । स कृतसंकल्पोऽभूत्–"कदापीमं वलीसुखं प्रतार्य पशून्हेपयामि" इति । गतेषु केषुचिद्वासरेषु कस्मिंश्चिदवटे केनापि निहितं सामिषं कूटयन्त्रं दृष्ट्वा क्रोष्टा प्लवङ्गोऽभिहितः–"प्रभो, कस्मिंश्चित्स्थलेऽहं निधिमासदम् । न कोऽपि तस्य स्वामी लभ्यते । अतो देवपादानामेव तत्र स्वाम्यमिति तर्कये । परस्तान्महाराजः प्रमाणम्" इति । अविज्ञातव्याजः स कपिर्निधिं ग्रहीतुं त्वरते स्म । स्पृष्टमात्रे पललपिण्डे कूटयन्त्रे धृतः । तदा स मर्कटो जिह्माय, क्रोष्ट्रे चातिमात्रं चुकोप । सोऽवदत्तम्–"नृशंसः पापी राजद्रोही चासि । न किमप्यत्याहितम् । निर्भरं त्वां दण्डयिष्यामि" इति । श्रुत्वैतत्क्रोष्टोच्चैरहसीत् । प्रस्थिते च तस्मिन्स परावृत्य विलोक्य सग्रीवाभङ्गं वनौकसमाह–"किंरे राजाहमिति न किं प्रकटयसि? कथमुन्माथं नाज्ञासीः?"

तात्पर्यम् ।

नाल्पबुद्धी राज्यधुरं वहेत् । राज्यधुरि तेनोढायां स स्वार्थं जनहितमपि विहन्ति । ईदृगुच्चपदारोहणे स एव नायोग्यो यो नीतिचञ्चुर्दक्षिणः सत्यसंधश्च । योऽमायो दुर्धर्षश्च भुजच्छायाश्रितप्रजासमयज्ञश्च । यो व्यवसायशीलः, शूरोऽप्यक्रोधनः, साधुरपि मार्दवरहितः, प्रियस्तुतिरपि वास्तवगुणानामेव यः स्तुतिमभिनन्दति, य आत्मश्लाघाद्वेषी कृत्याकृत्यपरिच्छेदकोऽदम्भी च । एवमादिभिर्गुणैर्हीना अपि ये भूमेर्धुरमाससञ्जुस्तेषां कीदृशः परिणामोऽभूदिति पुराणेतिहासेषु सुव्यक्तं भवति । तेभ्यः प्रकृतिपीडाः समजनिषत । ये धूर्तास्तैस्तत्स्वभावं ज्ञातवद्भिश्छन्दानुवृत्त्या ते वश्यतामने-

षत । लोकोपकारिकृत्येभ्यश्च तान्निवर्त्य विषयोपभोगेषु यथा ते मनो दृढं भन्त्स्यन्ति तथाकार्षुस्ते । स्वार्थं च साधयामासुः।

---

## कथैकनवती ( ९१ )।

### शृगालवन्यवराहयोः ।

कश्चिद्वन्यघृष्टिः कस्यापि महीरुहस्य प्रकाण्डाङ्घ्रौ दंष्ट्रां निश्यन्नास्ते । तत्र यदृच्छयागतः कोऽपि फेरुस्तं पृच्छति- "रे परितो दृष्टे कश्चिदमित्रस्त्वामभियातीति न दृश्यते। किमिति व्यर्थं दंष्ट्रां निश्यसि ? कोऽत्र हेतुः ?" किरिस्तं प्रोवाच—"भद्र, सत्यमब्रवीस्त्वम् । परमप्यवैषि क्षण आयुधानि मृज्यात् । यतो व्यसनकालेऽवश्यमवसरो लभ्य इति को निर्णयः ?"

#### तात्पर्यम् ।

संदीप्ते भवने कूपखननं प्रत्युद्यमकारी जडमतिः । यावद्बाल्ये स्मः, यावच्च वयं पितृभ्यां चिन्त्यामहे, यावच्चासंक्रान्तसंसारभाराः तावद्विद्याभ्यसनं कर्तव्यं सर्वैरस्माभिः, येन यौवने सुखं वसेम । तथा हि । कैशोरे प्राप्तविद्याफलमुपभुञ्ज्याम, अक्षगणं दमयेम, दुश्चरितेभ्य आत्मानं त्रायेमहि, रायं च संचिनुयाम, येन वृद्धाः सुखं वसेम । य आदित एवं संविधानं करोति स एवाप्रमत्तः, स एव पण्डितः, स एव पुमान्, स एव बुद्धेः प्रकामप्रागल्भ्यफलमाप्तवानिति ज्ञातव्यम् ।

---

## कथा द्वानवती ( ९२ )।

### लुब्धककलविङ्कयोः ।

कश्चिल्लुब्धकः पक्षिग्रहणार्थं जालं प्रसारितवान् । तस्मिन्काचिच्चटका संयता । सा बहुविधं विलप्याह–"किमिदं महत्संकटं म उपस्थितम्? किं मयापराद्धम्? नाहं कस्यापि स्वर्णममुष्णाम्, नापि दुर्वर्णम् । तण्डुलकणिकार्थं किं मे वधदण्डः?"

### तात्पर्यम् ।

अस्मिञ्जगति न्यायप्रवृत्तिरेवेदृशी । यदि कश्चिद्वराकः किमपि लघुपातकमाचरति, स महता दण्डेन योज्यते । ये चेभ्याः प्रतिष्ठिताश्च वयमिति दम्भं दर्शयन्ति त इतरेषां कोटिसंख्यं धनं साहसपूर्वमपहृत्यापि माध्यस्थेनोत्कोचेन चादण्डिताः सन्तो महादोषेभ्योऽप्यश्रमेण मुच्यन्ते ।

---

## कथा त्रयोनवती ( ९३ )।

### शलभोलूकयोः ।

कश्चिज्जरया परीतः पेचकः कस्याप्यगमस्य निष्कुहे स्वपिति । तस्यैव सालस्याङ्घ्रौ कश्चित्पतंगोऽगायत् । घूकस्तस्मिन्क्षणे तं द्विस्त्रिर्वा प्रार्थयांबभूव–"भद्र, अपेहीतः । मायासय माम् । तव कर्णकटुस्वरैर्मे निद्राया भङ्गो भवति ।" एतावता स शलभस्तं भर्त्सयित्वान्ते चाचुक्रोश । स आह–"गर्ह्यचरितश्चौरोऽसि त्वम्, दुःषमं वर्तसे । निशाटनस्त्वं चौरिकयोदरं बिभर्षि, दिवा च वृक्षकोटरे प्रच्छन्नः शेषे ।" कौशिकस्तमवदत्–"रे वाचाट, नियन्त्रय स्वजिह्वाम् । नो

चेत्पश्चात्खिद्यसे ।" तथापि स शलभ आक्रोशान्न व्यरमत् । स परिवादानन्तरं भूयोऽपि गातुमारेभे । ततो वायसारातिश्छद्मना तमस्तौत् । स आह—"आर्यचरित, क्षमस्व सापराधं माम् । अहमेतर्हि दृढं जाने धन्योऽसौ यस्ते गानं शृण्वञ्जागर्ति । ते मधुरस्वरैरधरीकृता वितन्त्रीस्वराः । श्रुत्वा ते गानं परभृतोऽपि जिह्रीयात् । सुष्ठु विरूढस्मृतिरसि । मन्निकटे सुधापूर्णमेकं काचभाजनमस्ति । तस्मादेकं कंसं तेऽपेक्षास्ति चेद्दास्यामि । गायतस्ते कण्ठः शुष्क इति तर्कयामि ।" शलभ उदन्याव्याकुलीकृतो दिवाभीतसकाशात्तत्पीयूषं पिबेयमिति महत्याशया कलितस्तमभिससार । आगत एव तस्मिन्नुलूकेनोत्क्षिप्य स न्यगीर्यत ।

## तात्पर्यम् ।

भिन्नरुचिर्हि लोकः । यदेकस्मै रोचते तदन्यस्य नेष्टम् । अतोऽनिच्छता केनचित्सकृद्द्विवारं प्रार्थनायां कृतायामपि तस्यार्दनमसांप्रतम् । तमुपद्रुत्य तेन सह कलहस्तु केवलं दुर्वृत्तत्वम् । एवं स्थिते य एवमाचरन्ति तेषु पीडितैर्दण्डितेषु न विस्मेतव्यम् ।

---

# कथा चतुर्नवती ( ९४ ) ।

## एकाक्षिविकलस्यैणस्य ।

कश्चिदेकाक्षिविकलो मृगो नित्यमब्धितटे चरन्नास्ते । स मेने चरतो मम काणमक्षि जलाभिमुखं दत्तं चेदविकलमक्षि च स्थलमभितो दत्तं चेद्घातयिता संनिहितः सञ्ज्ञास्यते । एवमरिष्टनिवारणोपायं संविधायात्मानमकुतोभयमजीगणत् ।

कश्चिन्मृगवधाजीवश्चिरं तब्दद्धलक्ष्यस्तं नासादयत्। ततः स नावमारुह्य सुगुप्तं जलतोऽभ्युपेत्य तं गुलिकाप्रक्षेपेण जघान। प्राणोत्क्रमणवेलायां स मृग आह—"भो विधे! अनधिगम्यं ते विलसितम्। यत्राहमितो मे भयमित्यजानां तस्मान्नाहं विद्धः, अपि तु यत्र नो भयमित्यहमबोधं तयैव दिशा मे निधनं जातम्।"

तात्पर्यम्।

मध्यमलोकेऽस्मिन्स्थितिर्नानाविधभयाकीर्णा। न तैरुपस्थातव्यमित्यरिष्टनिवारणोपायेषु कृतेष्वपि निर्भीकैरस्माभिर्नो भाव्यम्। प्रपञ्चेऽस्मिन्नागमनस्य मार्ग एक एव। निर्गममार्गास्त्वसंख्याः। तत्रास्माकं विमृश्यकारित्वं कियदुपकरणीभवेत्। यान्विघ्नान्वयं बोधामः, ये वा गोचराः भवन्ति, तेभ्यस्त्राणं विदध्याम। परं येऽगोचरा यांश्च वयं नावबुध्यामहे, ते शतशोऽस्मान्संवृण्वन्ति तेभ्यः कथं मुञ्चामहे? अनया दिशैवं बोद्धव्यम्। विशङ्का वयमिति न मन्तव्यम्। सभया इति मत्वा वा निर्भयत्वसंपादने नात्यर्थं व्यवस्येत्। यन्निर्भयत्वं नास्मास्वधीनं तदहर्दिवं भयस्य चिन्ता मौर्ख्यम्। नेदमुचितं विवेकशीलस्य नृजातेः।

---

## कथा पञ्चनवती (९५)।

## नदीमत्स्यसागरमत्स्ययोः।

कश्चिन्नदीमत्स्यः पूरस्य प्रबलरंहसा नदीमुखेनाकूपारमविशत्। नूत्नप्रदेशमवतीर्णः स तत्स्थलनिवासिनः शकुलिनस्तृणायामंस्त। स तानाह:—"मम देशो मम वंशोऽभिज-

नश्च युष्मभ्यं प्रशस्यतरोऽस्ति । अतः सर्वे यूयमुच्चपदं ग्राह- यित्वा मां संमानयितुमर्हथ । ततो नातिदूरे 'हलवा' इति ख्यातो मत्स्यविशेषस्तमुवाच—"रे मा मैवं वद । कदाचि- देकस्मिन्नानाये त्वमहं च यदि बद्धौ स्याव, तर्हि कः श्रेष्ठ- पदाधिकारीति ज्ञास्यसि ? श्रीमन्तो वहुमूल्यदानेनापि मां भक्षणार्थं क्रेष्यन्ति । त्वं स्वल्पपण्येन दरिद्रेभ्यो विक्रेष्यसे। अर्घव्यतिरेकेणापि वा दास्यसे ।"

तात्पर्यम् ।

विदेशं गत्वा यस्तत्स्थलं निन्दति स्वनीवृतं वा प्रशंसति सोविमृश्यकारी । सर्वस्य स्वस्वदेशे सहजः प्रेमा, यदि वयं परदेशं धिक्कुर्मः, स्वदेशं च स्तुमः, तर्हि तद्देशीया अस्मा- न्निषिध्य स्वदेशं प्रशंसिष्यन्ति । वस्तुतो देशश्रेष्ठत्वं नास्मा- नुच्चत्वमावहत्यन्तरङ्गगुणा एवावश्यकाः । यस्मिन्कस्मिन्नपि देशे पुमान्निवसतु, यो विद्वान्गुणी च स सर्वत्र पूज्यते ।

---

## कथा षण्णवती ( ९६ ) ।

### विदुषोः ।

अर्हन्तीचणं कमपि विद्वांसं क्रीडन्तं विलोक्यान्यः कश्चिद्धीमांस्तं परिजहास । तस्य स्मयं दूरीकर्तुं प्रथमो धनु- रेकमानाययत् । अपनीतज्यं समरेखं च तत्कृत्वा भूमौ विचिक्षेप । ततः सोऽन्यं कृष्टिमाह—"यदि त्वमिमं कूट- प्रश्नं विवृणोषि यथार्थनामा विचक्षणस्त्वम् ।" स दूरं दर्श्यपि व्याख्यातुं नाशकत् । ततः स प्रथमं प्राह—"नाहं जानामि, व्याख्याहि त्वमेव ।" प्रथमोऽवदत्—"न त्वं

जानासि ? कथयेऽहम् । शृणु । यदीदं धनुर्नित्यं नमितमाशु भङ्क्ष्यति, यदि पुनः सति प्रयोजने नामितं चिरं स्थास्यति, अधिकं च कर्म कारयिष्यते ।”

तात्पर्यम् ।

पुंसो मनो धनुःसदृक्षम् । अदः सदा कर्मणि व्यापृतं चेन्निःसारं भूत्वानुपयुक्तं स्यात् । अतः क्रीडनविहाराश्चित्तमपगतक्लमं कुर्वन्ति । शेमुष्यै तैक्ष्ण्यं च ददति । यद्यमी दोषरहिताः, तर्हि प्रसङ्गवशान्महद्भिरपि सुखमाचरितव्याः ।

---

## कथा सप्तनवती ( ९७ ) ।

### काकोलकलरवाणाम् ।

कस्यांचित्कपोतपालिकायां पारावता न्यवसन् । तेषां वृन्दं कश्चिद्द्रोणकाको वर्हाणि श्वेतीकृत्य विवेश । मौनमास्थितं तं पारावता न लक्षयामासुः । अनेन क्रमेण बहवो घस्रा व्यतीयुः । ततः कस्मिंश्चिद्दिने स काकोलः किं रूपमङ्गीकृतं मयेति विस्मृत्य रवितुमारभत । ततस्ते कपोताः संजातजातिप्रत्यभिज्ञास्तं प्रहृत्य विवासयामासुः । स पुनर्ज्ञातिवृन्दं निववृते । तस्य किर्मीराणि पिच्छानि दृष्ट्वा नायमस्मदीय इति तज्ज्ञातयोऽपि तं निःसारयामासुः । एवमविद्यमानां योग्यतामात्मन्यारोपयितुं यतिष्णुः स काकोलो विद्यमानामपि हारयित्वाऽकाकोलोऽकपोतश्चाजायत ।

तात्पर्यम् ।

ये छद्मवेषं धारयन्ति ते लोकान्न चिरं वञ्चयितुं प्रभवन्तीति हर्षस्थानम् । तेषां छद्मवेषधारिणां [illegible]

षस्याननुगुणं किमपि न्यूनाधिक्यं दृग्गोचरं भवति, येन तेष कैतवं दोषज्ञाः सद्यो जानन्ति ।

## कथाष्टनवती ( ९८ ) ।

### वराहीसरमयोः ।

यदृच्छासंगते वराहीशुन्यौ काशुप्रसवेति व्यवदेताम् ततः शुन्याह—"प्रतिप्रसवमहमुरूनर्भकान्सुवे । सूतिकालः न दीर्घः ।" सूकर्याह—"हला, सत्यमेतत् । परं प्रसवे प्रसं प्रसूतिं प्रत्युत्का भवसि । अतस्तेऽर्भका जननकाले दृष्टि हीनाः । नाहं तथा ।"

तात्पर्यम् ।

संभ्रमकृतकर्मणो वैकल्यमस्त्येव ।

## कथा नवनवती ( ९९ ) ।

### चटकाशशकयोः ।

कश्चिद्गरुडः शशमेकं कृकाटिकाग्रहणेन रुरोध । त तदभ्यासवर्तिनि कस्मिंचिदनोकहे समासीना काचिच्चट तमाह—"रे, त्वमतीव विचारमूढः । धिक्ते जीवितम् । त्वं निष्क्रियः सन्किमात्मानं व्यर्थं घातयसि ? उत्तिष्ठ । ध च । यदि यतसे, तर्हि चपलजातिस्त्वमरेर्हस्तान्मोक्ष्यस इ मे भाति ।" इत्थं सनिकारं तस्यां वदन्त्यामेव कश्चिच्छ्ये दनोऽवपत्य तां नखैरुदनयत् । तस्मिन्क्षणे सातिमात्रं वि लाप । परं तस्मिन्नदत्तावधानः श्येनस्तां गृहीत्वाचालीत् दृष्ट्वा तच्छशो मृतिकाले समाहितचित्तस्तामवदत्—"अये आत्मानं सुखां मन्यमाना भवती ममाधिक्षेप । सा

तेनैव भयहेतुनाक्रान्ता पश्यामि कथमेतर्हि वर्तसे ?"

तात्पर्यम् ।

ये परोपदेशे पण्डिताः, येषां च समापतिते व्यसने बुद्धि-र्भ्रश्यति, त उपहस्यन्ते ।

---

## कथा शती ( १०० ) ।

### नृपदासेरयोः ।

ग्रीष्मर्तावेकदा कश्चिद्राजोपशल्येऽटित्वा निवर्तमानः पथि स्थितं स्वोद्यानं विवेश । नानाविधवृक्षशबले तदुद्याने तत्त-द्रुमाणां रुचं विलोकयतीतस्ततो भ्रमति तस्मिन्नभ्यर्णे वर्त-मानः कश्चिद्दासः परिहितसुचैलो हस्ते मालिकस्य सेचनघटं गृहीत्वा यत्र राजास्थात्तस्मिन्नुद्देशे सेकमकरोत् । स मनुते स्म—"विक्रीतो दासोऽस्याहम् । जातु राजा म आस्थायुक्तां शुश्रूषामवलोक्य प्रसीदेत्, प्रेष्यभावाच्च मां विमोचयेत् ।" ततो यत्र यत्र राजागच्छत्तत्र तत्रापथिभिर्गत्वा सेचनं व्यधात् । तदनधिकारचर्चां राजा ज्ञात्वा तमाजुहाव । आह्वानसमका-लमेव द्रुतमागत्य स आशाबद्धो राज्ञः पुरतस्तस्थौ । तदा राजा तं वदति—"रे, उचितं कर्म विहायैतावन्तं कालं किमात्मा व्यर्थमायासितस्त्वया ? नासीत्किमपि प्रयोजन-मस्य व्यापारस्य । अस्य कालस्य क्षेपः साधीयसि कर्मणि युक्ततरः व्यपोहामि तर्हि ते शङ्काम्, मत्तो न त्वं सफलाशो भविष्यसि ।"

तात्पर्यम् ।

किमपि कार्यमनुरुध्यमाना अत्युपचारवन्तोऽन्येषां चित्तं

य आराधयन्ति ते यथा यथान्यं प्रसादयितुं यतन्ते तथा तथा सुज्ञास्तान्द्विषंति । न ते स्वार्थं साध्नुवन्ति । प्रतीपं तेषा-मुद्यमश्च निष्फलो भवति ।

---

## कथैकोत्तरशती ( १०१ ) ।

### मेषादस्य कृतघ्नस्य शुनः ।

कश्चिदजाजीवः स्वश्वानमतीव विश्वसिति । यदा स वहिर्गच्छति तदौरभ्रकं तदधीनं कृत्वा गच्छति तं विश्वा-सैकभूमिं कृत्वा विगतचिन्तस्तिष्ठति च । तेन शुना सोत्साहं सेवितव्यमिति तेन नवनीतमसृणां पौलिकामादयत्, तेन सार्धं चाटूक्तिभिश्च कथा अकार्षीत् । एवंस्थितेऽपि स्वामिनः परोक्षे स मेढ्रं हत्वा खादति । दिनेषु गच्छत्सु विदितमेतत्स्वा-मिना । ततो वध्यस्य तस्य वधे प्रायुङ्क्त । तदा श्वा तं भण-ति—"भोः स्वामिन्, मां घातयितुं नार्हसि । पश्याहं ते दीन-श्चिरंतनो भुजिष्यः । अजानता मयैकं द्वे वागसी कृते । तेन निस्त्रिंशो भूत्वा मे वधे तव प्रवर्तनमनुचितम् । वृक सदा बद्धवैरस्त्वया । तस्मिन्किं न वैरं निर्यातयसि ?" तं जाबालः प्रत्युवाच—"रे शठ, वृकाच्छतगुणं दण्डं त्वमर्हसि । यतोऽहं दृढमवैमि वृको मामपकरिष्यतीति । अतस्तद्विषये-ऽहं सावधानो भवामि । परं त्वं मम विश्वास्यो गोप्यकः । त्वद्विश्रम्भादहं प्रमत्तोऽस्मि । त्वां परमान्नैः पुष्णामि । स त्वमपकरोषि चेत्सुदुःसहमदः । तव कृतघ्नत्वं क्षन्तुमनर्हम् ।"

### तात्पर्यम् ।

यं वयमुपकुर्मः, यं च वयं विश्वसिमः, येन सह मित्र

त्वेन प्रवर्तामहे, तेन दत्तं विकारं न सहामहे, तं च न क्षमामहे । तस्य शाठ्याद्यद्दुःखं भवति तस्य शतांशेनापि दुर्हृदकृतादपकारान्न । अत ईदृशस्यापराधिनो दण्डसमये न्याय्योऽयमन्याय्यो वेति न वयं विचारयामः । परं चात्मनो व्यथानुरूपं दण्डं विदध्मः ।

---

## कथा द्व्युत्तरशती ( १०२ )।

### चौरशुनोः ।

संधिं छेत्तुं कस्यचिदिभ्यस्य निशान्तं कश्चित्कुम्भीलक आजगाम । तमागतं वीक्ष्य द्वाःस्थः श्वा बुबुक्क । ततः स पाटच्चरोऽभ्यूषशकलं तमुद्दिश्यास्यत् । तमगृहीत्वा स तमुवाद—"रे, प्रथममहं समशयि यद्विगाढायां रजन्यां त्वमत्रागतः, तत्त्वं कोऽपि दुर्जनो भवसीति । त्वं चापक्कमुपप्रददिथ । तेन ते खलत्वमिदानीं निश्चितम् । अहं मम स्वामिनो द्वारि स्थित्वा तस्य पस्त्यं रक्षामि । अतो यावत्त्वमस्य संनिधौ स्थास्यसि तावदहं भषिष्यामि । मात्र संदिग्धि । यथागतो गच्छ तावत् ।"

### तात्पर्यम् ।

ये कार्यसाधकास्ते मूर्खान्स्वार्थप्रवणान्वोपप्रदानैर्वशीकर्तुं प्रभवन्ति । परंतु ये धीराः स्वामिभक्ताः सच्चरिताश्च त उपदाभिर्न वशीक्रियन्ते ।

---

## कथा त्र्युत्तरशती ( १०३ )।

### परिवादिनीवादकस्य ।

कश्चित्परिवादिनीवादको [illegible] मध्यपा-

न्रञ्जयामास। तेषां प्रशंसावादान्श्रुत्वा सोऽचिन्तयत्—"एकदा संगीतगृहं गत्वात्मनो गुणं प्रदर्श्य धनकीर्ती सममेवाप्नुयाम्" इति। तस्यौत्सुक्यं दृष्ट्वा रङ्गाजीवाः संगीतशालां तं निन्युः। तत्र स्थलगौरवाज्जनसंमर्दाच्च तस्य कण्ठोत्थितः स्वरस्तन्त्रीस्वरश्च लुप्तो नाश्रूयत। येऽभ्यासवर्तिनस्ते शुश्रुवः। परं श्रुतगायकवादकाचार्यगीतवादनानां तेषां तस्य गानवादने विस्वरे ग्राम्ये च बभतुः। ततस्तैररुच्यां दर्शितायां सर्वे धिग्धिमिति वदन्तस्तमवाधीरयन्त, शालाया निरवासयंश्च।

तात्पर्यम्।

ये प्रशंसकानामज्ञानां वा प्रशंसावचनैरात्मनि गौरवमापादयन्ति ते लोक उपहास्यतां यान्ति। कश्चिन्नर्मसचिवोऽज्ञानलपसमाजे रञ्जयितुं प्रभवति। स किमभिरूपभूयिष्ठां परिषदं वचनैराह्लादयेत्? अतो रञ्जनविधावनादरः सन्नात्मनो योग्यतां श्रोतॄणां च योग्यतां येन गुणेन रञ्जयितुमिच्छामस्तस्मिन्स्वस्य चाञ्चवं सर्वमेतन्निपुणं परीक्षणीयम्। नो चेत्कृतं सर्वं निष्फलं भवति। अन्यच्च लोका उपहसन्ति।

---

## कथा चतुरुत्तरशती ( १०४ )।

### कुलीरयोः।

कर्कटाः स्वभावतस्तिर्यग्यानाः। एकदा काचित्कर्कटी स्वदुहितरं संतर्ज्योवाच—"कुत इयं लोकविद्विष्टा गतिरादृता त्वया? मुञ्चेमाम्" इति। दुहिता वदति—"मातर्, बुद्धिसामर्थ्यमनतिक्रम्य यत्साधितुं मे भाति तदहमनुतिष्ठामि।

यद्येतत्ते न रोचते तर्हि कथं मया गन्तव्यमिति त्वं मे दर्शय। तदन्वहमपि तथा गच्छामि।"

तात्पर्यम्।

यस्मिन्कस्मिन्नपि विषये परं दूषयामस्तदेव च स्वयमाचरामः। किं चित्रमस्मात्? परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्। परं यस्योपदेशानुरूपं स्वीयमनुष्ठानं स एव पण्डितः। न तु स यः केवलमुपदेशचतुरः।

---

## कथा पञ्चोत्तरशती ( १०५ )।

### बालदस्य्वोः।

कश्चिद्बालस्तस्करमेकं निशाम्य वापीतटे परिदिदेव। मोषकस्तं पप्रच्छ—"बाल, किं रोदिषि?" ततो बालः सफूत्कारं दीर्घमुष्णं च निश्वस्याब्रवीत्—"मम रूप्यामत्रं रज्जुत्रोटनेन वाप्यां पपात। किमहं करोमि? पितरौ मां दण्डयिष्यतः।" श्रुते तद्वचसि तस्मिन्नेव क्षणे स पाटच्चरः स्वलोप्त्रं परिहितवाससी चावतार्य वापीतटे न्यक्षैप्सीत्। वापीमन्तरवतीर्यानल्पं कालं पात्रमन्वियेष। ततोऽलब्धभाजनो निराशीभूतो निष्क्राम्य यावत्पश्यति तावत्स सभाण्डकपरिहितवासा बालकोऽदर्शनतामयासीत्। सर्वं तदादाय बालः पलायांचक्रे।

तात्पर्यम्।

येऽन्यान्वञ्चयित्वा स्वार्थं साधयन्ति, तेऽपि कदापि प्रतार्यन्ते, विद्यमानं हार्यन्ते च।

## कथा षडुत्तरशती ( १०६ )।

### आरण्यकप्रचेतसोः ।

कस्यचिद्वनवर्तिनो नदीरोधोवर्तिनमनोकहं लुनतो हस्तात्सहसा निःसृतः कुठारो जलमभजत् । ततः स शुशोच । मुक्तकण्ठं चारोदीत् । तस्य विलापं श्रुत्वा वरुण आविरासीत् । तं वनस्थः शोककारणमचकथत् । तदा पाशी जलान्तः प्रविश्य शातकौम्भं स्वधितिं हस्तेनादायोदमज्जत् । तं वनवासिने दर्शयित्वा पृच्छति—"रे, किमयं ते परशुः?" स उवाच—"नायं मदीयः" इति । ततो भूयोऽपि निमज्ज्य राजतं व्रश्चनमुदधरत् । तं दृष्ट्वा "नायमपि मम" इत्यरण्यसदुवाच । तृतीयोन्मज्जने विपिनचारिणो नष्टां वृक्षादनीं गृहीत्वोदगच्छत् । तां स मुदा स्वीचकाराप्पतिमुपकारिणममंस्त । तदा वनचरस्याजिह्मव्यवहारदर्शनेन संतुष्टो यादसांपतिस्तपनीयराजते द्वे अपि कुठारे तस्मै पारितोषिकत्वेन ददौ । उदन्तमेनं तस्य सजूः श्रुत्वा सरितं गत्वा हस्तस्थितं कुठारं बुद्धिपूर्वं कबन्धेऽपातयत् । कुठारनाशं सत्यीकृत्य च परिदेवितुं प्राक्रमिष्ट । तच्छ्रुत्वा यथापूर्वं प्रचेता अधितष्ठौ । स निमज्ज्योन्मज्ज्य सौवर्णं परश्वधमानयत्तं वनौकसमन्वयुङ्क्त च—"किमयमेव ते कुठारः?" अष्टापदनिर्मितं तं दृष्ट्वा तस्य बुद्धिभ्रंशो जातः। स प्रचेतसमाह—"बाढमयमेव मम कुठारः।" एवमुक्त्वा लोभेन पाशिनो हस्तात्तमादातुं प्रवृत्तः । अत्रान्तरे स तं संतर्ज्य सौवर्णकुठारमदत्त्वा तस्य कुठारमपि तस्मै न ददौ ।

### तात्पर्यम् ।

प्रायोऽनीत्याचरणप्रवणानि मनांसि जनानाम् । जगत्य-

सिन्धौर्त्येन वर्तितव्यमिति बहून्हेतूनेके कथयन्ति । ब्रुवन्तु ते किमपि । परं वस्तुत आर्जवतुल्यो नास्ति प्रधानो गुणः । पश्येह दक्षिणे जन एव सर्वकार्याणि निक्षिपामः । तमेव महाजनं मन्यामहे । परलोकप्राप्तिहेतुत्वेन केषामपि शास्त्रेषु सत्यशीलता न प्रशस्यति इति न । अत एव मायाहीन इहामुत्र च पूज्यो भवति ।

---

## कथा सप्तोत्तरशती ( १०७ )।

### विरुवतो रथाङ्गस्य ।

कस्मिंश्चिद्यन्तरि रथं वाहयति तस्य स्यन्दनस्यैकं चक्रं व्यरौत् । आकर्ण्य तच्छब्दं स व्यस्मेष्ट । तच्चक्रं पृच्छति च—"रे, अन्यानि चक्राणि न विरुवन्ति त्वमेव किमिति विरौषि ?" तदुवाच—"अतीवाहं क्लिश्ये । अविषह्यं तद्दुःखमतो रोदिमि ।"

### तात्पर्यम् ।

दुःखावेगं निगृह्य यो लोकेभ्यो दैन्यं न विवृणोति तं धीरं मत्वा लोकास्तस्मिन्स्निह्यन्ति । यः पुनः "हा कष्टम्, धिक् कष्टम्" इत्युदीर्य दैन्यं प्रकाशयति, स लोकेभ्यः साहाय्यमप्राप्य स्वलघुतामेव प्रकटयति ।

## कथाष्टोत्तरशती ( १०८ )।

### वृकवर्करयोः ।

कश्चिद्वर्करस्तृणौकःपटलमारूढोऽधस्तात्तिष्ठन्तं वृकमैक्षिष्ट । अथ तं समाचुक्रोश च । ईहामृगस्तमभिदधे—"रे नीच, इमानि वचांसि मे मनो दुःखयन्तीति मा मंस्थाः । अहं

जानासि न त्वममूनि दुष्टवचांस्युदीरयसि । परं तवाश्रयभूतमिदं कुटीरमिदं वक्ति ।"

तात्पर्यम् ।

अभिशापयुक्तं निःषमं यो वदति स आत्मनो लघिमानमेव प्रकटयति । आश्रयवशात्कर्हिचिदभद्रभाषी कोऽपि न साक्षाद्दण्ड्यते । अनेन दण्डाभावेनाहं महानिति न स गणयेत् । यद्यपि शारीरो दण्डस्तेन नानुभूतस्तथापि मानहानिर्जातेति न किं दण्डः ? अतो य ईदृशात्पामरादवमानं प्राप्तः, स न संज्वरेत् । स चिन्तयेत्—"नेदमवमन्तुः सामर्थ्यम्, अपि त्वाश्रयस्य । तथा यः कोपि परोक्षेऽस्मान्निन्दति तस्य कुत्सां श्रुत्वा न संतापः कार्यः । मन्तव्यं स विवर्णः प्रत्यक्षे वक्तुं बिभेति ततः परोक्षवादी" इति ।

---

## कथा नवोत्तरशती ( १०९ ) ।

### सदसद्दर्शिनः केसरिणः ।

कश्चन सिंहः श्वापदमेकमतर्हीत् । तस्मिञ्जिघत्सति च तेनैवाध्वना गच्छन्नेकः प्रतिरोधिः पुर आगत्य तं जगाद—"हरे, तवार्धं मम चैतस्य ।" केसर्याह—"रे धृष्ट, असति संबन्धे निर्लज्जो नामांशं याचितुमागतोऽसि । तूष्णीं तर्हि वर्त्मना गच्छ, नो चेद्धन्यसे ।" ततः स परिस्कन्दिस्त्रपावनतमुखोऽपि ससार । अत्रान्तरे तयैव पद्यया गच्छन्कश्चित्साधुः सिंहं दृष्ट्वा भीतस्तं पन्थानं वर्जयित्वा परतोऽन्यया वर्त्मन्या गन्तुं प्रववृते । तदा सिंहस्तं सादरमाहूय भणति—"रे, मा बिभीहि । त्वं साधुसमाचारोऽस्यांशमर्हसि । आयाहि तर्हि । एनं सत्त्वं विभज्य खादाव ।" एवमुक्त्वा सिंहस्तत्सत्त्वं द्विधा

विभज्यैकं भागं तस्मै साधवे समवशेषयत्, अन्यं च भक्ष-यित्वा वनमगाहत ।

तात्पर्यम् ।

उचितमेव विपश्चितां यत्ते साधून्विनयशालिनो गुणिनश्चाद्रियन्ते । ये धृष्टाः प्रियवादिनः पिशुना वाचाला दुर्विनीताश्च तेषां वासो न देयः । यश्चाधिकारे स्थितः स तु गुणिनां संग्रहे यतेत ।

---

## कथा दशाधिकशती ( ११० ) ।

### वृकच्छगलकपोतयोः ।

काचिच्छागी तर्णितुं बहिर्जिगमिषन्ती पोतं व्याहार्षीत्—"रे, द्वारमर्गलेन पिधेहि । यावदहं दिनान्ते प्रत्यागच्छामि, तावन्मापावृणु कस्यापि कृते ।" ततोऽदूरवर्ती कश्चिद्वृकः श्रुतसंदेशोऽजायां यातायां मुहूर्तेन द्वारमभिजगाम । तस्याः स्वरसंवादं विडम्बयन् "जात, उद्घाटय द्वारम्" इत्यलपत् । अजाशिशुर्मात्राज्ञानुरोधेन वातायनगतो यदा ददर्श, तदा कपटमलक्षयत् । ततः स वृकं व्याहरत्—"रे, अपेहि । अजेव शब्दायसे खलु, परमाकारस्ते वृकत्वं संभावयति । नाहमतो द्वारमुद्घाटयामि ते ।"

तात्पर्यम् ।

ये बाला मातापित्रोर्निदेशान्हृदि संस्थाप्यताननुरुध्यन्ते ते व्यसनैर्नाभिभूयन्ते । ज्यायसो विश्वस्यादित्यस्यायमेव हेतुर्यत्ते स्वापत्यानामशुभचिन्तका न भवन्ति । किमिति । यद्बालानामशुभं तत्तेषामप्यशुभम् । अन्यच्च वयोधिकास्ते कृत्याकृत्यं हिताहितमधिजानन्ति । एवंभूतौ मातरपितरौ ये

नानुरुध्यन्ते, ते शर्मभाजो नैव भविष्यन्ति ।

---

## कथैकादशाधिकशती ( १११ )।

### वृकशृगालवलीमुखानाम् ।

कमपि शाखामृगं मध्यस्थं कृत्वा तस्याग्रतो वृकः शृगालं स्तेयेनाभियुयोज । कुतूहलिनोऽन्ये पशवोऽपि न्यायसभां समीयुः । ततो वृकस्य प्रतिज्ञाक्रियानन्तरं शृगाल एकेनैवोत्तरेण प्रतिसमादधौ । स आह—"नाहं वृकस्य वस्त्वमोषिषम् ।" अथ प्रतिज्ञोत्तरक्रियाः सम्यग्विविच्य कीशः संक्षेपेणाख्यत् । स वृकमुद्दिश्याह—"रे, त्वत्स्वामिकं वस्तु किमपि न नष्टम् । शृगालमधिकृत्याहास्य निक्षेपमपजहर्थ त्वम् । नात्राहं संशये ।" एवमुभावपि कूटकृताविति निश्चित्य सभा विसृष्टा ।

### तात्पर्यम् ।

य एकदा कुहक इति विश्रूयते तं न कोऽपि प्रत्येति । वृकः परद्रव्यापहारकः शृगालश्चात्यन्तप्रतारक इति सुप्रसिद्धम्, अत एव व्यवहारनिर्णयस्तथाक्रियत ।

---

## कथा द्वादशाधिकशती ( ११२ )।

### देवरासभयोः ।

कस्यचिन्मालाकारस्य चक्रीवानतिभारं वाहंवाहं श्रान्तः । स नारायणं गत्वा विज्ञापयामास—"भोः कारुण्यनिधे, दत्वान्यं स्वामिनम्" इति । भगवांस्तं कुम्भकाराधीनमकुरुत । स तेनेष्टकाभारानवीवहत् । खरोऽनेनाप्यसंतुष्टहृदयो भूयोऽपि

गत्वा भगवन्तं व्यजिज्ञपत्—"दीनबन्धो, कुलालात्साधुतरं प्रभुं देहि" इति । ततोऽच्युतस्तं पादूकृते ददौ । तन्निलये वसन्स निर्भरमन्वशयिष्ट, आत्मन्यचिन्तयच्च—"पश्यत मे मौर्ख्यम् । अयं चर्मकारो द्वाभ्यामपि क्षोदीयान् । यतोऽसौ जीवन्तं मां कर्म कारयित्वा संस्थिते मयि मम चर्मापि ग्रहीष्यति ।"

तात्पर्यम् ।

विद्यमानावस्थायां खिन्नो नाम भूत्वा नव्यायां स्थित्यां सुखतरं वत्स्याम इति मन्यमाना देवानां प्रियाः । सर्वास्ववस्थासु सुखदुःखमस्त्येव । तस्मात्पुंसा वर्तमानावस्थायां संतुष्टेन भवितव्यम् । यतः प्रत्यग्रायां सुखमेव लप्स्यामह इति को निश्चिनुयात् ? कदाचिदधिकं दुःखमपि संपत्स्यते ।

---

## कथा त्रयोदशोत्तरशती ( ११३ ) ।

### मातापुत्रयोः ।

कश्चित्कुमारोऽध्ययननिमित्तेन कामपि पाठशालां जगाम । स एकदा सहाध्येतुः किमपि वस्तु मुमोष । तच्च स्वमात्रे गृहमानीय ददौ । सा बालं दण्डयेत्, परं तदकृत्वा तत्कृत्यं प्रशशंस । तस्मै बहुबीजं फलं भक्षणार्थं ददे । अनेन स यथा यथा ववृधे, तथा तथा महार्हद्रव्यस्तेये व्यापृतोऽभूत् । स एकस्मिन्काले चोरयन्रूपाभिग्राहितोऽबध्यत । उद्बन्धनेन घातयितुं राज्ञो रक्षापुरुषैर्वधस्तम्भं निन्ये । तत्कौतुकदर्शनाकृष्टो महानासीज्जनसंमर्दः । तत्र तस्य माताप्यागत्य दीर्घां यत्नं च निश्वस्य शुशोचैनम् । [illegible] स राजपुरुषा-

नभ्यर्थयत—"भो दयालवः पुरुषाः, अस्मिन्काल एकवारं मातरं द्रष्टुं मामनुजानीत ।" निशम्य तत्ते दयार्द्रीकृतास्तां तदुपकण्ठमाजुहुवुः । तदा स महतावेशेन सामर्षं तस्याः कर्णं ददंश । ततो जनानामुच्चावचाः प्रलापा अभवन्—"अहो कथमयं जाल्मः । पश्यत पश्यत, वधकाल आसन्नेऽपि महत्पातकमिदमाचरितममुना ।" स प्रत्याह—"सज्जनाः, शृणुत मेऽभ्यर्थनाम् । यदीमां मे मातरमहनिष्यं संप्रति, नाहं दोषेणालेप्स्ये । कुत इति पृच्छन्ति चेद्भवन्तः शृणुत । पूर्वे वयसि विद्यमाने मयि पाठशालातः सहाध्यायिनः कस्यापि वस्तु मोषित्वागतं मां तदैव यदीयमदण्डयिष्यद्बहुबीजं न नादास्यत्, किमाप्स्यमीदृशीं दशाम् ?"

तात्पर्यम् ।

माणवका जडा दुश्चेष्टिताश्च भवन्ति । तस्य हेतुः प्रायशः प्रसूजनयित्रोर्लालनमस्ति । आर्द्रमृद्घटस्य कर्णौ यथा नाम्यते तथा नमति । तथा पूर्वे वयसि बालस्य मतिर्यस्मिन्पथि प्रवर्त्यते तं पन्थानं न सा मुञ्चति । अतएव जनयित्री वा पिता वा ये वा गुरुजनास्ते तस्य शिष्टानुदर्शिते पथि प्रवर्तनेऽनलसा भवेयुः । इदमप्रौढवयस्येव कर्तव्यम् । यतः प्रौढवयस्के तस्मिन्दुर्गुणो लक्षव्ययेनापि न नाश्यते । ततो यद्यत्पापं स आचरिष्यति, तस्य दोषोऽमुत्र गुरुजनेष्वेवारोपयिष्यते ।

---

## कथा चतुर्दशाधिकशती ( ११४ )।

### वृकरुग्णगर्दभ्योः ।

काचिद्रासभ्यस्वस्थशरीराभवत् । साविलम्बितं मरिष्यतीति

प्रसृतां वार्तां श्रुत्वा द्विचतुराः कोकास्तां कुशलं प्रष्टुमायन् । ते निकाय्यप्रतीहारभूमौ स्थित्वा प्रच्छन्नाः सूक्ष्मं निरीक्षमाणा मङ्क्ष्वपृच्छन्–"किमस्ति तत्रभवत्या विशेषः ?" तच्छ्रुत्वा तस्याः पुत्रो बहिरागत्यावोचत्–"यादृशीमवस्थामार्याया भवन्त इच्छन्ति तादृशी नाद्यापि जाता ।"

तात्पर्यम् ।

रोगार्तं प्रति दिदृक्षवो ये समायान्ति तेषु प्रीतियुक्तचेतसागच्छन्तो विरलाः । स्वार्थापेक्षापरा बहवः ।

---

## कथा पञ्चदशोत्तरशती ( ११५ ) ।

### शलभपिपीलिकयोः ।

एकदा निदाघे वामलूरस्य हिरुग्धान्यं समाहरन्तीषु तदातपे तापयन्तीषु पिपीलिकासु क्षुधितः क्षामक्षामः कश्चिच्छलभस्तमुद्देशमवाप । स दैन्यपरीतमुखोऽयाचत–"आर्याः, एकमपि तण्डुलकणं दत्त्वा मे प्राणान्संधारयत । महत्पुण्यं संचिनुयात् ।" तदा काचित्पुत्तिका तमवदत्–"अयि दुर्मते, धान्यसमुच्चययोग्ये काले यथा वयं धान्यं समचिनुम, तथा किमिति न त्वं समचिनोः ?" सोऽब्रूत–"भक्षणपाननृत्यविनोदेषु कालो मे व्यत्यैत् । उत्तरकालचिन्ता नैव मे हृदि लेभेऽवकाशम् ।" तच्छ्रुत्वा सा प्राह–"तात, यद्येवं तर्हि कात्र गतिः ? ये न दूरदर्शिनः स्वादनपीतिविनोदैः कालं नयन्ति तेऽन्तेऽशनाभावेन म्रियन्ते ।"

तात्पर्यम् ।

यौवनेऽप्रमत्तो भूत्वा यो वित्तं संगृह्णाति स वार्द्धकं विषादेन नाक्रम्यत इति समक्षं पश्यन्तोऽपि केचिद्यौवनो पार्जितानि वित्तानि व्ययीकुर्वन्ति । किं तेषां मनसि ? अ ते चिन्तयन्ति, विकलेषु गात्रेष्विष्टवस्तूनि व्योम्नः पतिष्य न्तीति ? यद्यपि पुत्रा बन्धव आप्ता वा पश्चिमे वयस्यस्मा न्पुष्णन्ति, प्रसादेन वयं जीवामः । अपि च, पुत्रादय आत्मा नमविभज्य वत्स्यन्ति, गुरव इति भक्तिप्रह्वाः सन्तोऽस्मान्से विष्यन्त इति को निर्णयः ? अतो द्रव्यं संगृहीतं चेज्जर स्युपकरिष्यति । तस्माद्द्वितीये वयस्येव तत्संगृह्णीयात् ।

---

## कथा षोडशोत्तरशती ( ११६ ) ।

### खरसिंहकुक्कुटानाम् ।

एकत्र चरतोः खरताम्रचूडयोः कश्चित्सिंहः समापेदे संमुखायान्तं तं दृष्ट्वा कुक्कुट उच्चै रुराव । सिंहः कृकवाकु रावाद्बिभेति, अतः कर्णपथं प्राप्ते तद्रवे सत्वरं हरिः पराव र्तत । दृष्ट्वैतद्गर्दभश्चिन्तयामास—"मत्तो भीतिमुपेत्य सोऽपा द्रवत्" इति । ततः सरभसं स केसरिणमन्वियाय । कुक्कु टरुतान्तरमतिक्रम्य गते तस्मिन्मृगेन्द्रः परावृत्य रासभं कण्ठे चकर्ष । तत्क्षणे खर आत्मन्यचिन्तयत्—"हा हा, धिङ्मा मन्दधियम् । स्वदौर्बल्यं जानन्नप्यहं मिथ्याप्रतापमात्मन्या पाद्य मृत्युमुखेऽपतम् । नो चेदेतावता कालेन कुटुम्बं सुखमवत्स्यम् ।"

वास्तवसारेण विना मिथ्याधीरत्वं यो दर्शयितुं यतते,

कष्टां दशामनुभवति । आश्रयस्य सहायस्य वा बलेन यदि कर्हिचिदात्मनो विभेति कश्चित्, स आत्मनस्त्रसत इति निश्चित्य नैकाकी तमभिपतेत्, तस्यात्मनश्च बलाबलं निरूप्य वर्तेत ।

## कथा सप्तदशाधिकशती ( ११७ ) ।

### कपिशृगालयोः ।

कश्चन मर्कटः शृगालं संप्रार्थ्याह—"यदि दीर्घस्य लोमशस्य ते लाङ्गूलस्याल्पं भित्तं मे वितरिष्यसि, पायुदेशमूर्णोमि । अनेन हिमवातौ न मां बाधिष्येते । ते लूममाकाङ्क्षितप्रयोजनानि संपाद्याप्यधिकं विद्यते, तच्च त्वं पांसौ मलिनयसि । अतस्तस्माद्दलमेकं दत्त्वापि त उपरोधमन्तरेण मेऽर्थः सिध्यति ।" शृगालोऽवोचत्—"लाङ्गूलं मेऽतिदीर्घमिति वक्षि । भवतु नाम तत् । किमपि नाहमवगच्छामि । तत्परं ब्रवीमि ते, यावज्जीवं लाङ्गूलमेवं धूल्यां मलिनयेयम्, न पुनस्तुभ्यं तद्गतमेकं लोमापि दास्यामि ।"

### तात्पर्यम् ।

केषांचित्पुंसां वृत्त्युचिताद्धनाद्भूयानर्थो भवति । एवं स्थितेऽपि ते मन्यन्तेऽधिकं लभ्यते चेद्वरमिति । एवं चिन्ताकुले मनसि काणवराटकस्यापीष्टापूर्तादिषु व्ययो भवत्विति कुतस्तेषां मतिः प्रवर्तेत ?

## कथाष्टादशोत्तरशती ( ११८ ) ।

### रासभशुनकयोः ।

कश्चिद्गर्दभ एकदाचिचिन्तत—"मे स्वामी लघयति कि-

ह्यतितराम् । स इव यद्यहं नृत्यामि, प्रक्रीडामि, लाङ्गूलं चालयामि, अङ्कमारुह्य च निषीदामि, प्रियो भविष्यामि'' इति । एवं ध्यायति तस्मिन्वप्रं जग्मिवांस्तत्स्वामी निलयमागात्, अजिरदेशे वेदिकायां निषसाद च । तावता खरः प्रत्युद्गच्छन्नादौ ननर्त । इतस्ततस्ततो दीर्घस्वरेण चीच्चकार । तद्दृष्ट्वा कुतुकी स्वाम्युच्चैर्जहास । त्रिचतुरैः पलैस्तदेव कुतुकं तस्य जीवितसंशयस्य कारणमभूत् । यतः स गर्दभः पश्चिमचरणावस्थितः पूर्वाङ्घ्री महता प्रेम्णा स्वाम्युरसि न्यधात् । ततोऽङ्क उपविविक्षति तस्मिन्स्वाम्युच्चुक्रोश । तदाक्रोशमाकर्ण्य कश्चित्परिचारको गृहाभ्यन्तराल्लगुडहस्त एवागत्य लघुगुरुप्रहारैस्तं चक्रीवन्तं जर्जरीकृत्य, तं ज्ञापयामास प्रभुसंमताः सर्वे भवितुं नार्हन्तीति ।

तात्पर्यम् ।

केऽपि पुमांसोऽल्पश्चेव चेष्टाभिः स्वामिनं रञ्जयन्ति । ये तद्विधास्त एव तत्कर्तुमलम् । यद्यन्यस्तत्कर्तुं यतते स भग्नाशो भवति । यतः प्रकृतिवैचित्र्यं जनेषु दृश्यते । तदनुसारेण रञ्जनविषयाणामपि नैकविधत्वम् । अतः स्वस्वभावमनुरुध्य वर्तनमेव भूषणम् ।

---

## कथा नवदशोत्तरशती ( ११९ )।

### पशुपक्षिवातप्रम्याम् ।

कस्मिंश्चित्समये पशुपक्षिणां तुमुले जन्ये प्रवर्तमाने वातप्रमीरध्यायत् । मम वर्ष्मणो व्यूहनादहं पक्षी पशुर्वेति जना यत्संशेरते तदद्य मे पथ्यम् । अवसरेऽस्मिन्स्तर्हि

माध्यस्थ्यमवलम्ब्य स्वन्तो दुरन्तो वायं कलह इति प्रतीक्षेय । तत एकतरः पक्षो यथाभिलषितमङ्गीकरिष्यते । ततः समरभूमावविज्ञातेतरेतरभटयोरुभयोरपि पृतने अन्योन्यं विहतविध्वस्तमकुरुताम् । परस्परविशसनं विलोक्य पक्षिणो जेष्यन्तीति वातमृगो मत्वा तानुपययौ । दूरादवेक्षांचक्रे—"न्यूनाधिकदर्शने तदनुगुणं वर्तिष्ये" इति । ततोऽल्पेन कालेन पशवो जयिन इति तस्य प्रत्यभात् । तदा स तान्गत्वाश्वासयत्—"मन्मुखोन्दुरमुखयोः सादृश्यं वर्तते, अतो नाहं पक्षी । पशुरहमिति युष्माकं सङ्घे गृह्णीत माम् । वो हितमनवरतमिच्छेयम् । युष्मन्नोपजपामि ।" पशवस्तदन्वमंसत । अन्ते वैनतेयः पशून्विक्रम्य व्यद्रावयज्जिगाय च । तदा वातप्रमीरसुरक्षणार्थं ज्ञातिहस्ताद्भाविनमपमानं च निवारयितुं ततः पलायांचक्रे । तदाप्रभृति वृक्षकोटरेषु गिरिकन्दरासु च लीनः । सोऽद्यापि स्पष्टायां शर्वर्यां सर्वपक्षिष्वावासवृक्षस्थितेषु सुप्तेषु च सत्सु निजावासं जहाति ।

तात्पर्यम् ।

पक्षद्वयादेकतरस्यादृढाङ्गीकार उभयपक्षसाधारणदर्शनं पक्षावलम्बत्यागौ च नीचकर्म । केवलं स्वार्थमपेक्ष्य य उभयालम्बं कुर्वते ते नश्यन्ति । य उभावपि वञ्चयन्ति ते तेषां धौर्त्ये प्रकटिते हन्यन्त एव । यदि जीवन्ति तर्हि विस्तीर्णायामपीलायां कुत्रचिदपि न ते मुखं दर्शयितुं प्रभवन्ति, यत्र यत्र ते पापा यान्ति तत्र तत्र लोकास्तान्द्विषन्ति ।

---

## कथा विंशत्यधिकशती ( १२० ) ।

### भल्लूकमधुकोशयोः ।

कश्चिदच्छभल्लो वृतिमुल्लङ्घ्यान्तरागच्छत् । वनावलम्ब-

मानान्मधुकोशान्भङ्क्त्वा क्षौद्रमास्वादितुं प्रचक्रमे । ततो युगपदेव प्रत्यपकारबुद्धयः सर्वाः सरघास्तमभिदुद्रुवुः । परं तस्य त्वचः स्थूलत्वात्तनूरुहाणां निरन्तरत्वाच्च स निर्बाध एवासीत् । ततस्तास्तस्य नासाकर्णं ददंशुः । तद्वेदनया संरब्धः स स्वैरेव कररुहैः श्रुतिनासिकयोश्चर्माद्वृणोत् । एवं स्वापराधं स्वयमेवादण्डयत् ।

तात्पर्यम् ।

परपीडको येन केन प्रकारेण दण्ड्यत एव ।

---

## कथैकविंशत्यधिकशती ( १२१ ) ।

### क्रोष्टुकृकवाकोः ।

कश्चित्ताम्रचूडः कस्यचिदुच्छ्रिततरोः स्कन्धशाखामारुह्य तारस्वरेण तथा रुराव यथा तत्प्रतिस्वनेनापूर्यताखिलं तद्गहनम् । कश्चन जम्बुको भक्ष्यमन्विष्यन्ननतिदूरे बभ्राम । तं रावं च श्रुत्वा तमुद्देशमुपययौ । यावद्विलोकयति तावदुच्चप्रदेशभाजं तं ददर्श । दुर्ग्रहोऽयमिति मत्वा छलेन तमधोदेशमाक्रष्टुमनास्तं प्रलोभयितुमुपतरु गत्वा भणति– "भ्रातर्, आसेचनकं त्वां विलोक्य समाहितोऽहम् । परं त्वदधिष्ठितस्थानमुपेत्य नाहं गाढं त्वामुपगूहितुं प्रभुः । तर्ह्यहं जानामि, त्वमञ्जसाधस्तादागमिष्यसि, मां संश्लेक्ष्यसि च, न किम्?" कुक्कुटोऽभाषत–"मातुल,भूतार्थं कथयामि ते। अधःपातो न मे हितः । रे,त्वं तु मे मित्रम् । त्वदहं न शङ्के । परमन्यकरगतोऽहं कष्टां दशां प्राप्स्यामि । "शृगालस्तं बभाषे–"प्रियसुहृत्, श्वापदगरुत्मतामर्वाक्समयो जज्ञे । तत्रैवं निर्णीतम्, 'न कोऽपि कस्मा इतःपरं द्रुह्येत, न कमपि बाधेत,

सर्वैश्च स्नेहेन वर्तनीयम् । य एनं समयमुल्लङ्घयिष्यति स दण्ड्यो भवेत्,इत्युद्घोषितम् । कथमयमुदन्तो न ते श्रवणपथं गतोऽद्यापि । विस्मयेऽहम् ।" एवं वदतस्तस्योक्तिमवहितान्तःकरणेन शृण्वन्नपि स चरणायुधः शिरोधरामुन्नमय्य सुदूरमीक्षांचक्रे । स क्रोष्टुनाप्रच्छि–"भाव, किं सादरं वीक्षसे? अपि निर्वेदयसि?" कुक्कुट आह–"सखे, विप्रकृष्टान्तरे पञ्चषान्मृगदंशकानागच्छतस्तर्कये ।" गोमायुराह–"यद्येवं तर्हि नमस्ते । तात, साधयामि ।" कृकवाकुरुवाच–"भ्रातः, हंहो मागमः । नीचैरागतमेव ममावगच्छ । प्रतिपालय मां तावत् । सर्वत्र समयधर्मेण वर्तनमद्येति श्वभ्यो न भेतव्यम् ।" शृगालः प्रत्यूचे–"नहि नहि । यद्यपि समय उद्घोषितः तथापि श्वानो विदितसमया न वेति न जाने ।"

तात्पर्यम् ।

वञ्चका धूर्तैर्धूर्तिताश्चेन्मनो ह्लादते । धूर्तस्य गदितं चन्दन इव शीतलमस्ति । परं तस्य हृदि कर्तरीमेव विजानीयात् । अतोऽकारणं यत्रातिममत्वयुक्तं भाषितं श्रूयते तत्र विशेषतोऽप्रमत्तो भवेत् । यः कोऽपि स्वबुद्धिप्रभावेणेदक्षाणां शठानां मायाप्रपञ्चं सद्यो ज्ञात्वा तेभ्य आत्मानं मोचयित्वा तानेव व्यसने पातयति तमेव दक्षं विद्यात् ।

---

## कथा द्वाविंशत्युत्तरशती ( १२२ ) ।

### बिडालकुक्कुटयोः ।

एकदा 'कुक्कुटं व्यापाद्य पारणां कुर्याम्' इति बिडाल



इयेष । ततः सावधानो भूत्वैकस्मिन्नहनि प्रगेऽकस्मादवस्क-

शावक इति पुमान् ।



न्यैकं जीवग्राहमग्रहीत् । तदा कुक्कुटस्तमुवाद–"रे रे, मा वधीर्माम् ।" मार्जारोऽपृच्छत्–"किमिति ?" स आह–"अतीवोपयुक्तोऽहं जनानाम् । अहमहर्मुखे रौमि । अनेन सर्वे जाग्रत्युचितकरणीयेषु च व्याप्रियन्ते ।" ओतुराह–"अत एव त्वां तृणेह्मि । यस्त्वं कर्कशं रौषि, नित्यं नृणां निद्रां भनक्षि, स त्वं वध्यः । अपरं च मातृभगिनीरभिरमयन्नपि न जिह्रेषि ।" कुक्कुटो वदति–"भोः, अस्माकं स्वभाव एवायम् । अन्यच्च मत्तो मत्स्वामी शावकान्यण्डानि चापेक्षते । अतोऽहमदो दुष्कर्म कुर्वे ।" तदा वृषदंशकः सामर्षमाह–"रे दुष्ट, अलं वाचां वैचित्र्यं दर्शयित्वा । निगृहाण जिह्वाम् । त्वत्समो दुष्कर्मप्रवृत्तः प्राणितुं नार्हति ।" एवमुक्त्वा स तं तपस्विनं प्राणैर्वियुयोज ।

तात्पर्यम् ।

दुष्टोऽधिकारस्थितश्चेत्समीहितमवश्यं सात्स्यति । तस्याग्रतो गुणवत्त्वमनागस्त्वं वास्मान्रक्षितुं नालम् । ईदृशः पुमान्पापभीतिदर्शनेऽपि न व्यथते । अतस्तद्दर्शनं मुधा । यतस्तस्य मनोऽजस्रपापाचरणैः कठिनं भवति । स पापान्न बिभेति। अतो यदि शक्यं तर्हि तस्मात्पदात्तं च्यावयितुं यतेत।

---

## कथा त्रयोविंशत्यधिकशती ( १२३ ) ।

## शुष्कतृणचयस्थितस्य सारमेयस्य ।

कश्चित्सारमेयस्तृणराशिमधितष्ठौ । तत्र क्षुधापरिगतः कोऽपि गौस्तृणमास्वादितुमाययौ । ततः स सारमेयः सेर्ष्यं तमुद्दिश्याभषत् । सौरभेयस्तं धिक्कृत्याह–"रे मत्सरिन्, इदं

तृणं त्वं न खादसि, अन्यमपि खादितुं न ददासि । ईदृशस्य खलस्य विपदः सन्तु ते शश्वत् ।"

तात्पर्यम् ।

नास्ति मत्सरसमो दुष्टोऽन्यो विकारः । ये कामक्रोधादय इतरे विकारास्ते कियता कालेन शमं यान्ति । परमयमशान्तो नित्यं वर्धते । यथा यथा च वर्धते तथा तथाधिकं दुनोति । यतो मत्सरी परस्य विद्याधनप्रतिष्ठाभ्यः स्पृहयति, एतैः स हीनो भवेदिति काङ्क्षति । कथमिमा वासनाः फलिष्यन्ति ? कथं च पराभ्यसूयकः कृती भविष्यति ? अतो यो मत्सरी स सदाऽनिर्वृतः ।

---

## कथा चतुर्विंशत्यधिकशती ( १२४ ) ।

### श्वोरभ्रयोः ।

कश्चिच्छ्वोरभ्रमृणविषयेऽभियुयोज । व्यवहारं निर्णेतुं वृकगृध्रौ मध्यस्थावभूताम् । साक्षिलेख्यादिप्रमाणमगृहीत्वा तौ शुना क्रियया भावितोऽपि वृष्णिर्हीनवादीति निरचैष्टाम् । ततो जयपत्रे लब्धे श्वोरणं जघान । तस्य पललं ततो दुष्टमध्यस्थाभ्यां समं विभज्यादत् ।

तात्पर्यम् ।

चाटतस्करवञ्चकेभ्यः पीडां प्राप्य लोका नृपाधिकृतान्व्यवहारद्रष्टॄन्प्राड्विवाकादीनुपयन्ति । आदौ तेऽप्युत्कोचलिप्सया वादिनो रागाद्वा तं विघ्नन्ति । नास्मात्पापीयः किमपि कर्म । यो दुष्टो न्यायासनमास्थितः सन्पीडिताभिशापपात्रं भवति, स समृद्धिं न गच्छति । य उपदामादायान्यं विहन्ति स न धनं गृह्णाति, अपि तु गरलमश्नुते । स्वकुलं क्षपयिष्यति ।

यस्मिन्राज्ये एतादृशा न दण्ड्यन्ते तन्निष्कण्टकमप्याशु लयमेष्यति। नीतौ जगत्प्रतिष्ठितम्। यस्तां विहन्तुमिच्छति स मूढ आत्मानमेव प्रहरतीति बोध्यम्।

---

## कथा पञ्चविंशत्यधिकशती ( १२५ )।

### आतापिकृषीवलयोः।

कश्चिदातापी पारावतमेकमभिधावंस्तित्तिरग्रहणार्थं केनचित्क्षेत्रिणा प्रसारिते जालेऽवरुद्धः। गरुतौ सवेगं स्फालयति, मोक्षणाय यतमाने तस्मिन्, अदूरे किमपि कर्म कुर्वाणः कर्षकोऽभ्येत्य तं धृत्वा हन्तुमुद्यतः। तदा सकरुणं स तं प्रार्थयांचक्रे—"भोः, असुदानं कुरु मे। पश्य। नाहमपराध्यम्। अहं कपोतमन्वायम्।" कृषक आह—"भद्र कपोतः कथमपरराध ?" इति वदन्नेव स तस्य शिरः कबन्धाच्चिच्छेद।

### तात्पर्यम्।

दोषाय परपीडनम्। सा पीडाधिकं बाधतामूनं वा। आतङ्क उभयोः समान एव। ऊनं यद्यपि बाधेमहि मन्तुभाजो भवेमैव।

---

## कथा षड्विंशत्यधिकशती ( १२६ )।

### कपोतपिपीलिकयोः।

तर्षिता काचित्पिपीलिकोदन्याशान्तये कमपि प्रस्रवणं गता जलमाददानाप्सु मग्ना स्रोतसानीयत। कश्चित्पारावतस्तदवलोक्य दयार्द्रचित्तः स्रोतस्वत्याः कस्यचिच्छाखितः

श्छदं चकर्त, पयसि चाक्षैप्सीत् । तदालम्भात्पिपीलिकापि तीरभूमिं प्रपेदे । एकदा तस्मिन्नेव पारावते कुत्रचिन्निषीदति तदगोचरेण कश्चिल्लुब्धको जालं तत्रैव प्रसारयितुमारब्ध । ज्ञानवृत्ता सा पिपीलिका ततो व्याधं गत्वा तस्य चरणमदशत् । दंशवेदनया स सहसा पाणिपादं प्रचालयामास । तेन स कलरवो गृहीतार्थ उड्डिड्ये ।

तात्पर्यम् ।

प्रत्युपकारो नरस्य धर्मः । तस्मिन्नाचरिते प्रशस्योऽहमिति कोऽपि मन्येत चेत्पितरं स नाहन्प्रातिवेश्यनिकाय्यं वा न वह्निसात्कृतवानित्यपि प्रशंसितुं योग्यो भवेत् । प्रत्युपकारे कृते नो विशेषः । यः पुनः प्रत्युपकारं न कृत्वान्यस्योपकृतिमपि न स्मरति, तं चापकर्तुं व्यवस्यति, तस्य नीचत्वं किं वर्ण्यते ? अस्यां कथायां विशेषेणेयं नीतिः सूचिता । का सा ? प्रत्युपकारमनपेक्ष्यैव पारावत इवोपकर्तव्यं नरेण । एवंविधोपकारा यस्याभिमताः स एव धर्मशील इति वाच्यम् । उक्तं च, अन्यस्माद्ग्रहणं मानुषप्रकृतेर्लक्षणम् । फलमनपेक्ष्यान्यस्मै वितरणं दैवीं प्रकृतिं सूचयति ।

---

## कथा सप्तविंशत्यधिकशती ( १२७ ) ।

### ध्वाङ्क्षगरुडयोः ।

कस्यचिन्महीध्रस्योपत्यकासु कमपि वृष्णियूथं चरति स्म । तस्यैव शिखरिणः सानुनि निषेदिवान्कश्चिद्गरुडस्तदाक्रम्य कस्याप्यवेः पृष्ठे पादमर्पयित्वा तं वक्रीकृतनखैर्धृत्वोदपत्, अन्तरिक्षं च भेजे । तत्तस्य चेष्टितं विलोक्य कद-

म्बवृक्षस्थितः कश्चिद्वायसोऽपि तथा कर्तुं येते । तदैडकसो
र्णायामुद्ग्रथितपादः स व्यरौत् । तस्य स्वनं श्रुत्वा संनिहितं
वृष्णिपालो धावित्वा जग्राह तम्, तस्य पदयो रज्जुं बद्ध्वा
क्रीडनार्थं बालेभ्योऽदित ।

तात्पर्यम् ।

अन्यविडम्बने कर्तव्ये प्राक्स्वशक्तिस्थिती परीक्ष्ये । नो
चेत्तदेव दुःखाय भवति ।

---

## कथाष्टाविंशत्यधिकशती ( १२८ ) ।

### गृध्नुमत्सरिणोः ।

एकदा युगपच्छिवमन्दिरे तपस्यतोर्लोभिमत्सरिणोर्भगवा
नन्धकरिपुः प्रससाद, आह च—"भोः, वरं वृणीतम् । यद्या
चिष्येथे तद्दास्यामि । परं य आदौ यावद्याचिष्यते स तावद्
लभेतैव । अन्यस्तु तदेव द्विगुणं लप्स्येत ।" तच्छ्रुत्वा लोभी
चिन्तयति—'नाहमादौ प्रार्थयिष्ये । यतो यथाहं लोभा
विष्टस्तथायमपि । तस्मादसौ पुष्कलं धनं याचेत ततोऽवश्यं
मया द्विगुणमनायासेन लभ्यम् ।" एवं निश्चित्य स तूष्णी
मास्त । तज्ज्ञात्वा मत्सरी शिवं प्रार्थयांचक्रे—"भोः पुरारा
यदि प्रसन्नो भवान्, एकं मे नयनमुत्पाटय ।" "तथास्तु"
इति शूलिनोक्ते मत्सर्येकाक्षोऽभवत् । लोभिनस्तु द्वे अप्य
क्षिणी स्फुटिते ।

तात्पर्यम् ।

दुर्गुणेषु लोभमत्सरयोरतिनीचत्वं व्यक्तं भवत्यस्याः कथा
याः । अधिकद्रव्यलोभेन लोभी समीहितं देवताया अवाप्य

सुखी बभूव । मत्सरी च नापरः सुखी भवेदित्यात्मनो नयनं स्फोटयित्वा विग्रहवैकल्यमजीजनत् ।

## कथा नवविंशत्यधिकशती ( १२९ )।

### सिंहशृगालयोः ।

कश्चिच्छृगालः प्रथममेव सिंहं ददर्श । तदा भीतः सन्प्रण्यपतद्दीन इव बभाषे । द्वितीयदर्शने धैर्यमास्थाय तस्य मुखे निहितदृष्टिरभाषत । तृतीये तु तस्य पार्श्वे गत्वा चिरसंस्तुत इवादरशून्यमवदत् ।

### तात्पर्यम् ।

यथा शृगालस्य वर्तने रीतिभेदोऽदृश्यत तथा गरीयःसु वर्तनस्य भिन्नरीती न स्याताम् । प्रथमा हि भीतिप्रदर्शनं दैन्यप्रकटनं च । द्वितीया तु मर्यादां हित्वा समत्वेन व्यवहारः । तर्हि भीतिपारिप्लवत्वे विहाय वैयात्येन यत्समत्वदर्शनं तदपि वर्जयित्वा मानरक्षां कुर्यात्, वरीयोभिश्च शालीनतया वर्तेत ।

## कथा त्रिंशदधिकशती ( १३० )।

### हंसबकयोः ।

कमपि क्षेत्रं हंसबका नित्यं बबाधिरे । एकदा क्षेत्रस्वामी सावधानो भूत्वा भृत्यैः सह सहसा तानभ्यद्रवत् । तदा पीनसंहननाः स्थूलाश्च बहवो हंसाः समगृह्यन्त । लघूत्थानाः कह्वास्त्वाशूदडयन्त ।

### तात्पर्यम् ।



पृष्ठतो लग्नेऽभिघातिनि निर्धनेभ्यो धनिनोऽधिकं दुःख-

मनुभवन्ति । यथा सेनासंभारो निवेशस्थान एव सुखदाय-
कोऽन्यत्र पुनः पीडाकरस्तथा धनं स्वास्थ्य एव तोषकरम्।
विषमे काले तु तद्रक्षणमतिकठिनम् ।

---

## कथैकत्रिंदशाधिकशती ( १३१ )।

### वाजिगर्दभयोः ।

कस्यचिदश्वारोहस्य वाहः पृष्ठे सुवर्णरूप्यतन्तुस्यूतपट
निर्मितं पर्याणं कृत्वा कविकां परिदशन्हेषमाणो मार्गे
गच्छन्नास्ते । तस्मिन्नेव वर्त्मनि सोऽतिभाराक्रान्तं शनैः शनै
पादान्न्यस्यन्तं गर्दभं ददर्श। ततस्तं रासभं तर्जयन्नाह–"रे
अपेहि । नापैष्यसि यदि तर्हि चरणैरवताडयिष्यामि ।"
वराकः स दुर्वलः खरः कलहो निष्प्रयोजन इत्यवधार्य स
श्रममपासरत् । कतिपयैर्दिवसैः स एव हयः सङ्ग्रामे गुलि
काविद्धः सन्ननुपयुक्तो बभूव । तदा स सादी तं कस्मैचि
द्भाण्डवाहकाय व्यक्रीणात् । ततः स भारानुवाह । एकदा
पृष्ठसमारोपितप्रसेवः स मार्गे तेनैव चक्रीवता दृष्टः ।
तमाहूयावदत्–"आर्य, नमस्ते । यो मां तदा पादाघातैरव
मर्दितुमुद्यतः, स त्वमेव न किम् ? अहं तदैवोदपश्यं कदा
भग्नदर्पो भविष्यसि" इति ।

### तात्पर्यम् ।

यो मिथ्याभिमानी श्रेष्ठत्वमापादयितुं यतते स यावद्ब
लिनो महतो वाश्रयति, तावल्लोकास्तं मृषा प्रणमन्ति । प
क्षुब्धान्तरास्तं वस्तुतो द्विषन्ति । यदि नाम दैवगत्या स
एव निर्बलो भवति, तर्हि तस्मिन्दयां न कुर्वन्ति, अपि च
तमवधीरयन्ति अतो नायं पन्था महत्त्वार्जनस्य । अयं स

स्वयमुत्कर्षं द्विष्यात् । ये कामं महत्त्वं नापेक्षन्ते तानेवोत्कर्षो वृणुते । ये च तदपेक्षास्तान्परिहरति सः । यो मानं याचते स तं न लभते । यो नुतिमाकाङ्क्षति स जुगुप्स्यते । यो नम्रः स्मयरहितश्च स एव महत्पदमारोप्यते ।

---

## कथा द्वात्रिंशदधिकशती ( १३२ ) ।

### कृषीवलतत्पुत्राणाम् ।

कश्चित्कृषीवल आसन्नमृतिसमयोऽचिन्तयत्, यथाद्ययावन्मया व्यवहृतं तथा दिवं याते मयि मत्सूनवोऽपि सदा व्यवहरेयुरिति । स इममभ्युपायं प्रयुयोज । स सर्वान्खट्वोपान्त आहूयाचष्ट—"पुत्राः, अयुष्मदीयं हि नैव किंचिन्मत्संबद्धम् । अस्य कैदार्यस्यासां वाटिकानां च यूयमेव सर्वे प्रभवः । एतन्मुक्त्वा यन्मम संचितं धनं तत्कुत्रचित्क्षेत्रेषु हस्तादधो निखातं विद्यते । अत इदं कैदारिकं न कस्यापि हस्ते प्रापयितव्यम् ।" तच्छ्रुत्वा सर्वे निश्चिक्युः—"वृद्धेन किमपि द्रव्यं क्षेत्रेषु न्यखन्यत" इति । तत उपरते तस्मिंस्ते कर्षणमिषेण तत्क्षेत्रं हस्तदघ्नमुच्चख्नुः । तत्र निधिं तु न प्राप्नुवन्, परं सुकृष्टा भूमिरुप्तबीजं दशगुणमुत्ससर्ज । पुष्कलं धनमापुस्ते । तेषु पुत्रेषु कश्चिद्धीमान्बभूव । स सर्वानाचचक्षे—"भो भ्रातरः, अयमेव स निधिर्यः क्षेत्रे निखात इति पित्रा निगदितम् ।"

### तात्पर्यम् ।

सहजकौशलोद्यमयोर्लक्ष्मीः फलमानुषङ्गिकम् । उद्यमेषु



कृषिरद्वितीया । ये स्वयं कृषिकर्माचरन्ति ते व्यायामं लभ-

न्ते । अस्मान्निरामयत्वमेको लाभः । अन्यच्च संसृतौ यानि वस्तून्यवश्यानि तेषां न्यूनताभावोऽनेन लभ्यते । अतः सुज्ञाः क्षेत्रवाटिकादिकर्षणं रसेन कुर्युः । तत्र कृतः श्रमो न मोघत्वं याति । असंशयितलाभोऽयमेक एव व्यवसायो दृश्यते । आचरितकृषेर्नरस्य सर्वस्वं लुण्ठितुं स्तेना न शक्नुवन्ति ।

---

## कथा त्रयस्त्रिंशदधिकशती ( १३३ )।
## सिंहघोटकयोः ।

कमपि सुललितगात्रं तुरगं दृष्ट्वा कश्चित्सिंहो बद्धाशोऽभूत् । स आह—"धन्योऽहम् , यद्यमुष्य गन्धर्वस्य मांसखण्डमेकं लभेय ।" तत्प्राप्तयेऽनन्तरं सिंहो भिषजो वेशमग्रहीत्, सर्वपशूनुद्घोष्याज्ञापयच्च—"भ्रान्तार्णवनेमिः सुपरीक्षितौषधिवनस्पतिधर्मोऽहम् । न कश्चित्पशूनां व्याधिः, यस्य चिकित्सने नास्मि शक्तः" इति । हयस्तस्य छद्मप्रयोगमालक्ष्य मनसि चकार—"कपटप्रबन्धेनैवायं वञ्चयितव्यः" इति । ततः स सैन्धवो ऋजुतां संदर्श्य विकलगतिः सिंहमुपेयिवान् । आह च—"भो अगदंकार, मे पश्चिमचरणः शङ्कुना क्षतः, रुजापरीतस्य मे कृपया रुक्प्रतीकारं कुरु ।" सिंह आह—"पुत्रक, एहि पार्श्वे । पादं ते पश्यामि ।" एवमुक्तः सप्तिः सिंहमुपेत्य पाददर्शनच्छलेन पश्चिमपादतलेन तं प्रजहार । तेन प्रहारेण भिन्नास्यः स आर्तनादं मुमोच । पीतिस्तु द्रुतगत्याचलत् । "यो मां वञ्चयितुमियेष तमहमवञ्चयम्" इति जहास च ।

तात्पर्यम् ।

कपटिनं प्रतार्य मनो ह्लादते । प्रतारणं कुहकं वा यद्यपि सर्वथैव नीचं महतोऽनुचितं च, तथापि यो विप्रलब्धुमायाति तस्यान्तरायकरणं मनोरथभङ्गश्च नीतिरेव ।

---

## कथा चतुस्त्रिंशदधिकशती ( १३४ ) ।

### सिंहव्याघ्रक्रोष्टूनाम् ।

कस्यांचित्काननावनौ कश्चित्सिंहो द्वीपी चोभयतो धावन्तौ युगपन्मृगशवं प्रापतुः । तदा विवदमानौ तौ चिरमयुध्येताम्, उभावपि विद्धकायौ श्रान्तौ भूमावशयाताम् । अत्रान्तरेऽकस्मात्कोऽपि जम्बुकस्तेन वर्त्मना यंस्तौ तदवस्थौ दृष्ट्वा धीरं तयोरन्तरागच्छन्मृगकुणपं चकर्ष । द्वावपि योद्धारौ परं तटस्थौ सन्तौ ददृशतुः । शक्तिक्षयान्न प्रत्यबध्नीताम् । ततो द्वावपि विवेकं प्राप्य वदतः स्म–"अहो, पश्यतमावयोः कलहस्य फलम् । अयं चौर आवयोर्भक्ष्यमस्मत्समक्षं कर्षति । आवां च परस्परमेवमहतां यथा तस्य हस्तात्तदाक्रष्टुमपि शुष्मावयोर्न शिष्टम् ।"

तात्पर्यम् ।

यदुक्तम्, द्वयोः कलहे समुपस्थिते तृतीयस्य लाभो भवति । कस्यचिद्वस्तुनः कृते द्वौ कलिमुत्पादयतः । इदं मदीयमहमेवेदं ग्रहीष्यामीत्यतिनिर्बन्धं कुरुतः । लब्धावसरः कश्चिदितरो द्वावपि निहत्य समृद्धो भवति । अतो विचक्षणाः पुरुषाः कलहे न मनो बध्नीयुः । अपि तु संदध्युः । एतदेव श्रेयः । एवं कृत इष्टलाभे किंचिदूनं भवेत् । भवतु । परं तन्महान्तं नाशं व्यावर्तयति । यत उच्यते, 'सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।'



---

## कथा पञ्चत्रिंदशाधिकशती ( १३५ )।

### शृगालरोगार्तसिंहयोः ।

एकदा सिंहो मिथ्यापप्रथत्—"अहमामयवान्, अस्मिन्समये ये पशवो मां द्रष्टुमेष्यन्ति, तान्मे सुहृदो गणयिष्यामि" इति । तदनुरोधेन जम्बुकवर्जं सर्वे सिंहस्य गुहां समासेदुः । तद्धृदि निधाय सिंहो वृकं तद्गवेषणाय निभृतं प्राहिणोत् । स गत्वा शृगालमाह—"भ्रातः, कथं त्वं निष्ठुरः? रे, सर्वे देवपादान्द्रष्टुं जग्मुः । कथमिति त्वं नागतोऽसि?" शृगाल आह—"माम, तत्रभवन्तं मृगाधिराजं गत्वाचक्ष्व-'देव, साष्टाङ्गं प्रणिपत्य शृगालो मन्मुखेन विज्ञापयति, यथापूर्वं मम देवं प्रति प्रेम, नात्र लेशमपि संदिग्धि, सांप्रतमप्यहं साक्षात्प्रणामेनात्मानं पवितुमायास्यम्, परं किं करोमि ? देवगुहायां दृष्टायां वेपते मे हृदयम्, यतोऽत्र निवेशनप्रविष्टानां पशूनां पदपङ्क्तिर्दृश्यते,न पुनः प्रत्यागतानाम्।

### तात्पर्यम् ।

यद्यत्कार्यं समुपतिष्ठति तत्तदपरीक्ष्याङ्गीकृतं चेद्धानिर्भवति । भूयाञ्जनो येन गतः स पन्था इति मत्वा कस्मिन्नपि कार्ये यदि व्याप्रियेमहि तर्हि प्रायशो जनाः परप्रत्ययनेयबुद्धयो भवन्ति । तेषु स्वार्थसाधक एको द्वौ वा भवतः । स यथा तान्नयति तथा ते व्रजन्ति । अतो वहवः किंचित्कुर्वन्तीति तथैव कार्यमिति चेन्न । वयमपि सारासारं बलाबलं परीक्षेमहि ।

# निर्णयसागरस्थविक्रेयसंस्कृतपुस्तकानि।



| | मू. | मा.व्य. |
|---|---|---|
| ईसब्नीतिकथा–(प्र० भागः)–कथाः १–६० | ।= | ८॥ |
| कादम्बरी—बाणभट्टकृता, भानुचन्द्रसिद्धचन्द्रप्रणीतया टीकया सहिता. .... | ५ | ।= |
| तिलकमञ्जरी—श्रीधनपालविरचिता. .... | २॥ | ।- |
| दशकुमारचरितम्—दण्डिकृतं, पूर्वपीठिका, उत्तरपीठिका, कवीन्द्रसरस्वतीकृतपदचन्द्रिकाख्या टीका, शिवरामकृता भूषणाख्या टीका, लघुदीपिका टीका, ( केवलं दशकुमारचरिते ), पदचन्द्रिकाटीका च ... .... | १॥ | ८= |
| पञ्चतन्त्रकम्—श्रीविष्णुशर्मसंकलितम्..... | १ | ८॥ |
| प्राचीनलेखमाला—(प्रथमो भागः ले. सं.६२) अस्यां श्रीभोजप्रभृतिप्राचीननृपतिभिर्विद्वद्भ्यः पारितोषिकाणि ( भूम्यादीनि ) तद्दानपत्राणि च यानि समर्पितानि, तान्येव प्रसिद्धानि सन्ति. | १॥ | ८= |
| प्राचीनलेखमाला—( द्वितीयो भागः ).... | १॥ | ८= |
| प्राचीनलेखमाला—( तृतीयो भागः )..... | १ | ८-॥ |
| भोजप्रबन्धः—श्रीबल्लालविरचितः. .... | ।- | ८' |
| हर्षचरितम्—बाणभट्टकृतं, शंकरकृतसंकेतटीकया सहितम्. .... .... .... | २ | ८= |
| हितोपदेशः—नारायणपण्डितकृतः. .... | ॥ | ८' |

तुकाराम जावजी,



निर्णयसागरमुद्रणालयाध्यक्षः.

# ईसब्नीतिकथाः ।

## प्रथमो भागः ।

नारायण बाळकृष्ण गोडबोले.



मूल्यं ६ आणकाः ।

|| श्रीः ||

# ईसब्नीतिकथाः ।

# ÆSOP'S FABLES.

## PART I.

CONTAINING SIXTY (1-60) FABLES OF ÆSOP.

TRANSLATED INTO SANSKRIT

From the Marâthî Text of

SADÂS'IVA KÂS'INÂTHA CHHATRE,

BY


NÂRÂYAṆA BÂLKṚISHṆA GODABOLE, B. A.

SANSKRIT TEACHER, ELPHINSTONE HIGH SCHOOL, BOMBAY.



SEVENTH EDITION.

PUBLISHED

BY

TUKÂRÂM JÂVÂJI,

Proprietor of Javaji Dadaji's "Nirnaya-Sagar" Press.

Bombay:

1914




*Price 6 Annas.*

अथ

# ईसब्नीतिकथाः ।

## कथा प्रथमा ( १ ) ।

### रत्नकुक्कुटयोः ।

द्वित्राभिस्तरुणकुक्कुटीभिः सहावकरनिकरं विकिरतस्तल्लब्धापूर्ववस्तुभिस्ता रञ्जयतः कस्यापि तरुणकुक्कुटस्य दृष्टिपथं सहसा किमपि रत्नमाजगाम । तद्वीक्ष्येदं रत्नमिति स जज्ञौ, परं कस्तस्योपयोग इति न बुबोध । ततः स्वमौढ्यं निह्नुवानस्तद्भर्त्सयितुमुपचक्रमे । स पक्षौ विसार्य शिरोऽवधूय वक्रवक्त्रस्तन्निजगाद—"रे, त्वं हार्यसि । परं कस्तवोपयोगः । अहं त्वेवं मन्ये यद्भूतलगतानि निखिलान्यपि रत्नान्येकस्य यावनालकणस्य षोडशीमपि कलां न स्पृशन्ति" ।

तात्पर्यम् ।

पुरुषस्य विद्यालाभः साध्वसाधुनीत्यनीतिपरिच्छेदश्चोपयोगज्ञानाभावे ताम्रचूडस्य रत्नमिव निष्प्रयोजनः । एवंविधा विद्यासत्त्वेऽपि मूर्खा आत्मनो मौर्ख्यं छादयितुकामा विद्यादीनुपहस्य स्वं मतं प्रतिपादयन्ति । एवं च भाषन्ते—"किंप्रयोजना विद्यादिगुणाः । सद्यःफला गुणा एव गुणाः" इति एवं वदन्तो विद्वांसोऽपि हीनवृत्तयो भवन्ति ।

---

## कथा द्वितीया ( २ ) ।

### वृकाजशिश्वोः ।

एकदा घर्मकाल आतपक्लान्त एकोऽजशिशुः पिपासार्दितो भूत्वा जलं पातुमदूरवर्तिनीमल्पसरितमगमत् । तत्रान्तस-

प्रदेशे जलं पिबन्तं वृकमीक्षित्वा निम्नप्रदेशभाग्जलमादातु-मारेभे। वृकस्तु दूरात्तं दृष्ट्वा "केनापि निमित्तेन कलहमुत्पाद्याहमेनं व्यापादयामि भक्षयामि च" इति मनसि चकार। ततस्तमभिगत्योचे—"आः पाप, कथं मया तृट्शमः कर्तव्यो यद्येवं जलमाविलयसि। किंनिमित्तोऽयमनुचितारम्भ इति तूर्णं निवेदय। नो चेद्वध्यो भवसि"। भीतः सोऽजशिशुः सविनयमवादीत्—"भो वृकश्रेष्ठ, यदत्रभवान्वदति तत्कथं भवेत्। त्वत्तो यज्जलं वहति तदहं पिबामि। एवं स्थिते मया कलुषितं जलं प्रतीपं त्वां कथं प्रवहेत्"। वृकोऽगदीत्—"अस्तु नामैतत्। त्वमधमोऽसि। षण्मासात्प्राङ्मां त्वमशप इत्यहमश्रृणवम्"। स शिशुरवादीत्—"हा कष्टम्, कथमसंभवः। यस्य जातस्य मम मासत्रयमपि न पूर्णं सोऽहं षण्मासात्प्राग्भवन्तमशपमिति कथं संभवेत्"। वृकोऽत्रापि निरुत्तरोऽभूत्। ततो महतावेशेन नेत्रे विस्फार्य दन्तैर्दन्तान्विघट्टयन्पादाघातैर्भुवं कम्पयन्निव तमुपसंगम्य तारस्वरेणावोचत्—"भो दास्याः पुत्र, यदि त्वं नाशाप्सीस्तर्हि शप्त्रा तव पित्रा भाव्यम्। नो विशेषः"। एवमुक्त्वा स तं दीनमवधीत्।

तात्पर्यम्।

दुष्टाशयवतो बलवतोऽग्रे सत्यं मां त्रास्यत इति दुर्बलो न तिष्ठेत्।

---

## कथा तृतीया ( ३ )।

## राजप्राप्तये स्तुतविष्णूनां भेकानाम्।



कस्मिंश्चित्कासारे निवसन्तो भेका एकदा समेत्य मन्त्रयां-

चक्रिरे—"नैतद्युक्तं यद्वयं स्वैरं चरामो यथेष्टं कुर्मश्च । यद्यस्माकं कोऽपि स्वामी स्यात्तर्हि समीचीनं भवेत् । यतस्तस्य तन्त्रे वयं वर्तिष्यामहे" । ततः सर्वे मिलित्वा विष्णुं प्रार्थयांचक्रिरे—"भो भगवन्, राजानं देहि" इति । विष्णुरपि तेषां वचोऽङ्गीकृत्य "गृह्णीतैनम्" इत्याभाष्य दारुखण्डमेकं वियतोऽपातयत् । तस्मिन्पतिते तदाघातेनासमन्ताज्जलमालोडितं महाञ्शब्दश्चाभूत् । भीतिग्रस्तास्ते तस्यारान्नेयुः । कतिपयैः क्षणैस्तन्निश्चलं बभूव । ततो निश्चेष्टं तद्दृष्ट्वा शनैःशनैस्तदुपजग्मुस्तदारुरुहुस्तेन समं चिक्रीडुश्च । तदा "अचेतनोऽयं राजा नापेक्षितः । अस्मात्साधुतरो राजा याचनीयः" इति मिथः संमन्त्र्य भूयोऽपि विष्णुं तुष्टुवुः । ततो विष्णुः क्रौञ्चं प्रैषिषत् । स आगत एव मण्डूकान्विदार्यात्तुमारेभे । तदा सकलकुलनाशमसहमानाः पुनर्विष्णुं प्रार्थितवन्तः—"इतोऽन्यः कश्चिद्राजा प्रेष्यताम् । नो चेत्पूर्वावस्थाभाजो वयं विधेयाः" इति । विष्णुस्तच्छ्रुत्वोवाच—"नाहमिदानीमेवं करोमि । यो मया प्रथमं दत्तः स वो नारुचत् । अतः स्वापराधस्य फलं भुज्यताम्" इति ।

तात्पर्यम् ।

यस्यां स्थितौ भगवान्कमपि स्थापयति सा तेन न गर्हणीयान्या च न वाञ्छनीया । वाञ्छिता चेद्यादृशीमाप्नुयात्तादृशीमुपभुञ्जीत । तत्र भगवन्तं नोपालभेत । एकं राजानमप्रियं मत्वान्यमिच्छन्ति, त एव तस्य वशे व्रजन्ति । यदि सोऽधमस्ति तर्हि कस्योपालम्भः ।

## कथा चतुर्थी (४)।

### मयूरपत्राणि तनावारोहयतो द्रोणकाकस्य।

कश्चिद्द्रोणकाक आत्मीया नीचाः समागमानर्हाश्चेत्यमंस्त। महत्पदं चाभिललाष। पूर्वोक्तं दृढं संप्रधार्य कानिचिन्मयूरपिच्छानि चिकाय। तानि च स्वपक्षतावारोप्य मयूरवृन्दमविक्षत्। बर्हिणास्तु तं वीक्ष्य काकोऽयमिति ज्ञात्वा समन्ततः परिवव्रुः। प्रथमं तं चञ्चुप्रहारैर्जर्जरीकृत्य तानि पिच्छान्यपहृत्य स्ववृन्दात्तं निरवीवसन्। ईदृशीं कष्टामवस्थामनुभवति निर्वेदमापन्ने स्ववृन्दं विविक्षति तस्मिञ्ज्ञातपूर्वचेष्टास्तेऽपि तं न स्वीचक्रुः। तत एकः काकस्तं धिक्कुर्वन्नाह—"रे मूढ, यस्यां जातौ भगवांस्त्वामस्राक्षीत्तां यदि त्वं नात्यक्ष्यस्तर्हीदृशमपमानं किमलप्स्यथाः"।

तात्पर्यम्।

ईशो यस्यां स्थितौ निर्मिमीते तां हीनां मत्वा परस्य महत्त्वमभिलिप्सुरेवं विपद्ग्रस्तो भवति। स आत्मीयेषु द्वेषबुद्धिमुत्पादयति। ईदृशः पुमानुभाभ्यामपि वञ्चितो भवति। ये परे ते तं धिक्कृत्योपहसन्ति। निजास्तु जातिद्विडिति तं नाङ्गीकुर्वन्ति।

---

## कथा पञ्चमी (५)।

### जले प्रतिबिम्बितस्य शुनः।

कश्चिच्छ्वा मुखेऽपूपशकलं धृत्वा नद्याः पारं गच्छन्नन्तरात्मनः प्रतिबिम्बं जलेऽपश्यत्। तदा सोऽचिन्तयत्—"यदयमपरः श्वापूपशकलं गृहीत्वा गच्छति" इति। तस्मात्तं शकलं जिघृक्षुर्लोभेन मुखमपावृत्य तदादातुं यावत्प्रवृत्तस्तावत्तन्मुखा-

दपूपशकलमुदके पतितं सत्तलं जगाम। पुनः स तन्न लेभे।

तात्पर्यम्।

य ईश्वरेण दत्तेऽर्थे संतोषमनवाप्यान्यस्यार्थं ग्रहीतुमिच्छति तस्येतरस्माल्लाभो न जायत एव। अन्यच्च स्वीयोऽर्थोऽपि नश्यति।

---

## कथा षष्ठी ( ६ )।

### सिंहपशूनाम्।

एकदा कैश्चित्पशुभिः सिंहेन सह समयोऽकारि—"यदस्माभिः सर्वैरैकमत्येन वर्तितव्यम्, लब्धमात्रं च समं विभजनीयम्"। एकस्मिन्नहनि सिंहवृकशृगालतरक्षुभिर्मिलित्वैको मृगोऽघानि। शृगालस्तं चतुर्धा विबभाज। तदा सिंहः पुरो भूत्वा तेषामेकं भागमङ्गुल्या निर्दिश्याह—" शृणुत भोः सत्त्वाः, मम भागधेयोऽयमित्येनं विभागमहं गृह्णामि। द्वितीयोऽयमपि मयैव ग्रहीतव्यः। यतो यद्भवद्भिर्विक्रान्तं तन्मदीयेनैव प्रभावेन"। ततस्तृतीयं भागं निर्दिश्य सशिरःकम्पं ब्रूते—"इमं भागमप्यहमाददे। यतोऽहं वो राजा, यूयं च मे प्रकृतयः। अतो भक्तिप्रह्वेण चेतसा यूयमेनं मां दास्यथैव। तुरीयोऽयं भागस्तु मया रक्षणीयः। यतो यूयं जानीथ, विषमोऽयं कालः। सेनापरिग्रहोऽस्माकमदभ्रो धान्यादिभोज्यवस्तुसंग्रहस्त्वल्प इति। यतो नीतिरेवेदृशी यद्भविष्यदापदर्थे सद्य एवोपायः कर्तव्य इति। किमभिमतं वो यदहं वच्मि। नेत्युच्यते चेन्नाहं दोषेण स्पृश्ये। यूयमेव नञ्चयथेति सम्यग्विचारयत"।

तात्पर्यम् ।

बलवतां दुर्बलानां च मैत्री न चिरस्थायिनी । बलवन्तः समयकाले शपथं कुर्वन्ति । परं सति प्रसङ्गे समयभङ्गं कर्तुं न विलम्बन्ते । अतो बलवतां सङ्ग एव वाच्यः । एकदा तेषां वशगो भूत्वा तैर्विप्रलब्धः सन्किमेभिरेवं वञ्चयितव्य-मित्यन्यस्याग्रे सविस्मयं पृच्छतीव वाच्या ।

---

## कथा सप्तमी ( ७ ) ।

### वृकबकयोः ।

कश्चिद्वृको मेषमेकं व्यापाद्याघसत् । तस्यैकमस्थि तस्य गले रुद्धम् । तत आर्तः स उच्चै रटन्वने बभ्राम । यं यं सत्त्वं मार्गे ददर्श तं तमतिकरुणया वाचोदैरयत्—" सौम्य, यदि कृपया गलगतमिदमस्थि निष्कासयसि तर्ह्यनल्पं पारि-तोषिकं दास्यामि" । तत एको बकः पारितोषिकलोभेन पुरो गत्वाभयशपथं कारयित्वा तदानने स्वां लम्बां ग्रीवां निवेश्य तन्निष्कासयांबभूव । ततो बके पारितोषिकं याचति वृको विस्फारितचक्षुस्तं ब्रवीति—"रे अधम, अदृष्टपूर्वस्त्वत्सदृशो मूर्खः । तव ग्रीवा मे गल आसीत्तां न चर्वित्वा त्वं जीव-न्मुक्तः । एतावताप्यसंतुष्टः पारितोषिकं याचसे" ।

तात्पर्यम् ।

केचनैवंविधा अधमाः सन्ति यत्तेषामुपकरणे द्वौ दोषावु-पजायेते । एकस्तावदनर्हाणां साहाय्यकरणम् । द्वितीयस्तु तैः संबन्धं कृत्वा विपद उपनयनम् । यत उपकारिष्वप्यपकार-

करणं दुष्टानां स्वभाव एव। एतादृशेभ्यो हानिं विना मोक्षे जाते महाँल्लाभो जात इति ज्ञेयम्।

---

## कथाष्टमी ( ८ )।

### जले पश्यन्त्याः शम्बर्याः।

कापि शम्बरी नदीजलं पिबन्त्यम्भसि प्रतिबिम्बितमात्मनो रूपं दृष्ट्वा परं मुदमलब्ध। ततः पादप्रभृति शिरःपर्यन्तं सर्वानवयवानेकैकशो निरूपयन्त्युवाच—"ममाननस्य शोभयित्रेतद्विषाणयुगलं मे शिरसि कियन्मनोहरमस्ति। कथं रुचिरे मे नयने याभ्यां कमलान्यप्यधःक्रियन्ते। कथं मेऽङ्गं कुसुमसदृशम्। यदि मे पादाः शोभना अभविष्यंस्तर्हि रूपवत्त्वे न कोऽपि मामजेष्यत्। परं किं करोमि। एते मे लज्जामावहन्ति। इमे कृशा दुर्दर्शनाश्च विद्यन्ते। एषामभावोऽपि श्रेयान्"। एवं विचिन्तयन्त्यां पादवैरूप्यविषये दुर्मनायमानायां तस्यां व्याधाः समापेतुः। तदागमनं परिज्ञाय सा पलायत। तेऽपि तामन्वसार्षुः। ततस्तान्वञ्चयितुमपथेन गन्तुं प्रवृत्ता सा शाखालग्नाभ्यां शृङ्गाभ्यां रुद्धा सत्यपप्तत्। अनुपदं धावद्भिः संनिकर्षवर्तिभिस्तैरपि सा सद्योऽघानि। तदा सा मनस्युवाच—"कष्टं कष्टम्। ये मे हीनत्वमानयन्तीत्यहमब्रवं तेऽस्मिन्कृच्छ्रे मां ररक्षुः। परं यन्निमित्तो ममाहंकारो जातस्तदेव मे नाशायाभवत्"।

### तात्पर्यम्।

स्त्रियः सर्वेष्ववयवेषु न वयं दर्शनीया इति न विषीदेयुः। यथा दुर्दर्शनोऽवयवस्तासां पातिव्रत्यरक्षण उपयुक्तो

भवति तथा न रम्यः। पातिव्रत्यं नाम स्त्रीणां जीवनम्। तस्याभावे मृतकल्पा एव ताः।

---

## कथा नवमी ( ९ )।

### काकजम्बूकयोः।

कश्चित्काको महान्तं मांसखण्डं मुखेनादायोड्डिड्ये। तुङ्गवृक्षशिखरं च गत्वा निषसाद। एतदुदीक्षमाणः कश्चिज्जम्बूकस्तस्य तरोस्तलमाससाद। कपटेन तत्सौन्दर्यं प्रशंसितुमारेभे—"अरे वयस्य, सत्यमहं ब्रवीमि यत्त्वन्निकाशो रम्योऽण्डजोऽद्ययावन्न मयादर्शि। कथं तव पतत्राणि सुन्दराणि, कथं कोमलानि। किं ते शरीरकान्तिं वर्णयामि। तवावयवसौष्ठवं विस्मृतनिमेषेण चक्षुषावलोकनीयम्। निखिलं तवानुकूलमस्ति। अतस्तव स्वरमाधुर्यमस्त्येवेति तर्कयामि। यदि स स्वरो मधुरः स्यात्कः शक्नोति तव सादृश्यमुपेतुम्"। काक इमां छलस्तुतिं श्रुत्वा कोऽहमिति व्यस्मार्षीत्। ततः कांश्चिद्भावविशेषानभिनीयात्मन्यचिन्तयत्—"अस्य स्वरभ्रान्तिं व्यपोहामि" इति। एवं निश्चित्य गातुमारब्ध। गातुं प्रवृत्तस्यैव तस्य मुखान्मांसखण्डो भूमिमापेदे। तद्गृहीत्वा तन्मौर्ख्यमुपहसञ्जम्बूको यथेष्टं देशं जगाम।

### तात्पर्यम्।

यः स्तुतिप्रियः संस्तया मुह्यति स वञ्च्यत इति जानन्तोऽपि नरास्तद्वशा भवन्ति। मोहमनाप्नुवन्तो विरलाः। यः प्रशंसितुं न जानाति सोऽफलप्रयत्नो भवतु नाम, परं प्रशंसिता कुशलश्चेदप्रमत्तस्यापि मनो हरेत्। तदप्येव जायते।

ये प्रशंसया न मुह्यन्ति तेषां स एव गुणः प्रशंसित्रा वर्णितश्चेत्तान्मोहयति । अत इमं पाशं निराकर्तुमयमेवोपायो दृश्यते, यन्नो गुणानां परीक्षकेणात्मना भाव्यम् । अन्यस्योक्तिं न विश्वसेत् । यदि वयमेव सम्यगात्मनो गुणान्न परीक्षांचक्रमहे तर्ह्यन्य आत्मनो योग्यताविषये किं कथयति । अखिलानां जन्यूनामात्मोपरि प्रीत्युद्रेको वर्तते । आत्मनोऽन्यः श्रेयानिति वक्तुं न कोऽप्युत्सहते । तथैवैकस्य योग्यतामन्यो यथार्थतया न जानाति । एवं सति यो नौति स किमपि प्रयोजनमुद्दिशतीति जानीयात् ।

## कथा दशमी ( १० )।

शुन्योः ।

काचित्प्रसवोन्मुखी शुन्यपरां प्रार्थयांचक्रे—"आर्ये, तव मन्दिरं मामेकमासं वस्तुं देहि । प्रसवादूर्ध्वं भवदधीनं करिष्ये" । सा तथेत्युक्त्वा स्ववेश्म गृहोपस्करं बहिर्नीत्वा तन्निघ्नमकरोत् । ततो मासि याते गृहस्वामिनी शुनी प्रसूतां शुनीं सुखं प्रष्टुमागता सप्रश्रयमुवाच—"भवति, अविकलैरवयवैः प्रसूतिवेदना भवत्योत्तीर्णेति तोषमाप्नवम् । अधुना बालकैः सह हिण्डन्तीं बहिश्चरन्तीं भवतीं कदा द्रक्ष्यामीत्युत्कण्ठितं मे चेतः" । तस्या आशयं विदित्वा प्रसूता शुनी तां प्रतिबभाषे—"लज्जेऽहं खलु यन्मया भवत्या गेहं बहुकालमध्युषितम् । अनेन मे वासेन भवती बलवदक्लिश्यत । परं का गतिः । मे शिशवो लघुत्वान्मामनुप्रयातुमशक्ताः । अतः पक्षपर्यन्तं यदि कृपया गेहे वासं दास्यस्युपकृता भवामि । गृहस्वामिनी शालीनतया पक्षावधिकं वासमदि-

क्षत् । पक्षे गतेऽपि सा गृहं नामुचत् । तदा सापरां भूयोऽप्युवाच -"यत्त्वं गृहान्न निर्गच्छसि तत्किं प्रसह्य निर्वासनमिच्छसि । अधुना मे गृहे वास इष्टः" । तच्छ्रुत्वा प्रसूता शुन्याह—"किं त्वं हठान्मां निर्वासयितुमिच्छसि । निर्वासय मां तर्हि यदि शक्नोषि । व्यक्तमहं कथये बलात्कारेणानिर्वासिताहं गेहं त्वदायत्तं नैव करोमि" ।

## तात्पर्यम् ।

यस्य हस्ते शशो दृश्यते स एव व्याधत्वेन गृह्यते । एवमपि यस्याधीनं किमपि वस्तु स एव तस्य स्वामी भवति । ईदृश्यां लोकरीत्यां सत्यां यत्कस्यचित्प्रियतमं वस्तु तत्परकरगतमपि मां पुनरेष्यतीति निर्णयाभावे परस्मै स न दद्यात् । ये च धीमन्त उदारास्ते त्यागरूपेणान्यस्मै ददति । परं यो न विश्वसनीयोऽथवा यो वञ्चक इति संदिह्यते तस्मा उपभोगार्थं दानं बुद्धिमान्द्यम् ।

---

## कथैकादशी ( ११ ) ।

## दर्दुरानडुहोः ।

कस्मिंश्चिदनडुहि शाद्वले चरति सति तत्र कूर्दमानानामल्पकायानां दर्दुराणां मध्य एकस्तस्य पादभारेणाक्रान्तोऽमृत । अपरे दर्दुरा गृहानव्राजिषुस्तत्प्रवृत्तिं मात्रेऽख्यन् । तेऽचक्षिषत—"मातर्, अद्ययावदीदृशं महाकायं सत्त्वं वयं नैक्षिष्महि" । तच्छ्रुत्वा दर्दुर्युदरमीषदाध्मायताननुयुयुजे—"किमेतावान्स सत्त्व आसीत्" । ते चख्युः—"एतस्मादपि महत्तरोऽभवत्" । भूयोऽप्याध्मातुं प्रवृत्ता साप्राक्षीत्

"किमेतावान्" । त ऊचुः—"मातर्, उदरस्फुटनं यावदाध्मातापि तेन समत्वं नाप्स्यसि" । ततोऽखर्वेण गर्वेणाध्माता सत्युदरं स्फुटित्वा पञ्चत्वं जगाम ।

तात्पर्यम् ।

निर्धनेन स्वसामर्थ्यं सम्यक्परिच्छिद्य व्ययः करणीयः । श्रीमता सार्धं पौरोभाग्यं कर्तुमुद्धतश्चेद्दर्दुरीव नंष्टा ।

---

## कथा द्वादशी ( १२ ) ।

### जम्बूकसारसयोः ।

कश्चिज्जम्बूक एकदा सारसं स्वगृहे भोजनाय न्यमन्त्रत । तस्य परिहासकाम्यया चारुस्थाल्यां पायसं निधाय तस्य पुरोऽतिष्ठिपत् । तत्पात्रमुभयतः स्थित्वोभौ भक्षितुं प्रववृताते । परं सारसो दीर्घचञ्चुत्वादायासैरपि पात्रस्थं पायसमास्वादितुमक्षमो बभूव । अत्रान्तरे जम्बूकः सर्वं तद्भक्षयित्वा पात्रं लिलेह । सारसोऽप्यलब्धाभ्यवहारो विलक्षो भूत्वा गृहं वव्राज । तज्जम्बूकस्य कौटिल्यं मनसि संस्थाप्यान्यस्मिन्दिने सारसो जम्बूकमह्वत् । अलिञ्जर आम्ररसं निक्षिप्य तस्याग्रेऽवास्थापयत् । तस्यालिञ्जरस्यातनुतनूदरकण्ठतया जम्बूकस्य मुखप्रवेशस्यानवकाश आसीत् । तदा सारस आत्मनो लम्बां ग्रीवामन्तःप्रवेश्यैवं खादितव्यमिति तस्मै निदर्शयांबभूव । तथा कृत्वोपदेशव्याजेन यथेष्टं रसं पीत्वा तृप्तिमध्यगमत् । प्राशनकाले यदा यदा सारसो ग्रीवां बहिश्चकर्ष तदा ये बिन्दवस्तस्यालिञ्जरस्योपरि पेतुस्ताँल्लेहंलेहं जम्बूकः समाहितो बभूव । परं ह्यतीव तप्तोऽभूत् । ततो निर्गमकाले स सारसं व्याजहार—" सखे, यत्त्वं चकर्थ तद्यु-

क्तमेव । यथाहमकृषि तथैव त्वमकृथाः । अतो मयात्मा न खेदयितव्यः" ।

तात्पर्यम् ।

परं परिहस्य या मोदानुभूतिः सा सतां न मान्या । यः एवं करोति तेनान्यस्य कृतौ विषादो न कार्यः । यथा प्रकृतकथायां जम्बूको व्यधात् । तथाहि, आत्मना दत्ता कूटमुद्रान्येन प्रत्यर्पिता चेत्स्वीकर्तव्या । तदकृत्वा यदि कश्चिदात्मनः परिहासं करोति तं निन्दामः । परं यथा वयमवमानितास्तथा सोऽप्यस्माभिरवमानितोऽभूदिति चित्ते न कुर्मः ।

---

## कथा त्रयोदशी ( १३ ) ।

### शिवागरुड्योः ।

काचिद्गरुडी स्वशावकेभ्यः किंचिदाहारार्थमन्विष्यन्त्यनाश्रयं कंचन शिवापाकं ददर्श । तन्नखराभ्यामादायोड्डयमानायां तस्यामदूरस्थिता शिवा ससंभ्रममागत्य करुणस्वरे साम्राभ्यां नेत्राभ्यां तामनुनिनाय—"भो गरुडि, दीनाहम् मयि कृपां कुरु । अगतिकाया ममैकमेव बालकं मापहर । मे बालः प्रत्यर्पितश्चेद्बालकदानश्रेयसा संसृज्यसे" । वीतदया सा गरुड्यात्मन्येवमचिन्तयत्—"मम नीडस्तुङ्गशाखिशिखरे विद्यते । तत्रावस्थिताया म इयं वराकी पीडां कर्तुं कथं शक्ता" । अतस्तस्याः प्रार्थनामनादृत्य तं बालं स्वशावकानामग्रे स्थापितवती । तदा सा शिवा संक्रुद्धा सती वैरप्रतीकारोपायं प्रति व्यापृता । तस्मिन्नेव दिवसे समीपपाटीं ग्रामदेवतातुष्टये खर्वटवासिभिर्नानाविधहव्यैर्हुतमाग्निं यदृच्छ

याल्लोके । तत्रत्यमेकमलातं मुखे गृहीत्वा यस्मिंस्तरौ तस्या गरुड्याः कुलाय आसीत्तस्याध उपतस्थे । समन्ततो घासपुञ्जान्काष्ठानि च संचित्य तत्तरुदाहप्रयोगपरा बभूव । दृष्ट्वैव तद्भीता गरुड्यचिन्तयत्—"शावकैः सहाधुनाहं भस्मसाद्भवामि" इति । ततः प्रतीपं सा शिवां समारराध—"भोः शिवे, अतीवापराद्धं मया । वैरं संहर" । एतावदुक्त्वा सा जीवन्तमेव तस्याः पोतं प्रत्यार्पिपत् ।

तात्पर्यम् ।

विद्याधिकाराभ्यामुपनीतेन मदेन बलिनो वयमिति मत्वान्येषां घाताय न प्रवर्तनीयम् । महदाश्रयिणो वयम् । यश्च जिघांसितः स दुर्बलोऽस्मान्बाधितुं कदापि न समर्थ इति न मन्तव्यम् । अल्पशक्तिरपि कदा केन प्रकारेण कस्मिन्वा स्थले वैरं निर्यातयतीति निश्चेतुं न शक्यते । सुप्रयोजितस्य वैरस्य शान्तिर्न सुकरा । महान्तमपि नरपतिं छद्मघातका हन्तुं प्रभवन्ति । यो वैरनिर्यातनपरः स आत्मत्यागेनापि येन केन प्रकारेण वैरिणं नाशयति । काचिज्जरतिकापि राज्ञो गृहं वह्निसात्कुर्यात् । दीनो दुर्बलोऽपि प्रभविष्णोः शिशुं हन्यात् । एवं सति ये निष्करुणा लोकानुपप्लवन्ति तैर्दूरदर्शिभिर्भाव्यम् ।

---

## कथा चतुर्दशी ( १४ ) ।

### लम्बकर्णवन्यसूकरयोः ।

कस्यांचिदरण्यान्यामेकदा लम्बकर्णशिशुर्वन्यसूकरश्च मिथः समगसाताम् । ततः स लम्बकर्णशिशुः परिहासबुद्ध्या तमुवाच—"भाव, प्रणामस्ते" । तमपूर्वमुपचारं दृष्ट्वा

सूकरो विसिष्मिये क्रोधवशं गतोऽन्त्राण्यस्य विदार्य बहिर्निष्कासयेयमितीयेष । परं विविच्य स गर्दभमाह—"रे गर्दभापसद, अपसरेतः । यथेप्सितं देशमविलम्बितं गच्छ । रासभस्यास्त्रात्मदंष्ट्रां दूषयितुं नोत्सहे । अन्यथा निमिषार्धेन त्वां हन्याम्" ।

तात्पर्यम् ।

ये विचारशून्यास्ते पण्डितंमन्या भूत्वा महतां परिहासमारभन्ते । यदि पुनस्ते तेभ्यो निराकुला निवर्तन्ते तैर्महाँल्लाभो गणनीयः । मूर्खेण मूर्खैर्भृत्येन भृत्यैर्नीचेन नीचैः सह वर्तितव्यमिति सम्यग्ज्ञात्वा महान्तः कोपायावकाशमदत्वा क्षुद्रस्यैकं द्वौ वापराधौ मर्षयन्ते । एवं दृष्ट्वा नीचा ह्रियं विहाय वारंवारं तथैव न वर्तेरन् ।

---

## कथा पञ्चदशी ( १५ ) ।

### वृषभवर्षाभ्वोः ।

द्वावनड्वाहौ सरसीतीरे युध्यमानौ सरोगतेनैकेन वर्षाभ्वा दृष्टौ । ततः स द्वितीयं वर्षाभ्वं भणति—"रे, पश्य पश्य । किमिदमग्रे वर्तते । हन्त कास्माकमिदानीं गतिः" । द्वितीयोऽवादीत्—" किमेवं बिभेषि । तयोर्युद्धेनास्माभिः कः संबन्धः । तयोर्जातिर्भिन्ना, रीतिर्भिन्ना, भक्ष्यमपि भिन्नम् । तावस्मानुद्वेजयितुं न युध्येते । अपि त्वहमहमिकयाहमेनं निर्वास्य यूथनाथो भवामीति विवदेते । एवं स्थितेऽस्थाने खलु नौ भीरुपैति" । प्रथमस्तं प्रत्याह—"रे, यत्त्वमवोचस्तत्सर्वमवितथमेव । परं भविष्यद्वृत्तं कथये । तयोरेकोऽन्येन



पराजितः ग्लायमान इत एवागमिष्यति । तदास्मत्कुलमध्या-

कियता नेदीयानिति पाठ्यम्।



त्केऽपि तत्पादभारेणाक्रान्ता मरिष्यन्ति । तद्विदांकरोतु भवान्कियान्नेदीयान्संबन्धोऽस्ति" इति ।

### तात्पर्यम् ।

महतां विवादेषु समीपस्था हीना नश्यन्ति । ये तु महतां पक्षमङ्गीकृत्य पुरःसरा भवन्ति तेऽपि नश्यन्तीति किं वक्तव्यम् । दीना अपि महद्भिः सह विवदेरन्यस्मिन्विवादे सिद्धे बहवः कुशलिनो भवन्ति । परमेतादृशाः पुमांसो विरलाः । ये जनताकुशलं निमित्तीकृत्य विवादमर्थयन्ते ते प्रायः स्वार्थसिद्ध्याशंसिनो विद्यन्ते । नहि ते परार्थे विवदन्ते । अपि त्वस्माभी राजसत्ताभाग्भिस्तदुपभोगभुग्भिश्च भाव्यं सर्वेऽस्माननुरुध्येरन्नित्येव हेतोर्विवदन्ते । अधिकारेऽधिष्ठितास्तु प्रजापीडने तत्परा भवन्ति । अतः सद्भिरेतादृशा विवादरता नरो दूरतः परिहर्तव्याः । यदि शक्तिरस्ति तर्हि विवदमानावुभावपि निहत्य लोकपीडा वारणीया ।

---

## कथा षोडशी ( १६ ) ।

### द्विभार्यस्य ।

कस्यापि नुर्द्वे भार्ये आस्ताम् । तयोरेका तत्समानवया रूपेणानतिवर्णनीया चासीत् । अपरा तु षोडशवर्षा तरुण्यतीव रूपवती बभूव । सा सौन्दर्यादिभिः कान्तगुणैस्तं परमतूतुषत् । परं सा तस्य पञ्चाशद्वर्षदेशीयत्वात्तेन न तुतोष । तस्य केशाः कियन्तः कृष्णाः कियन्तश्च शुक्लास्तस्य वृद्धभावं सूचयन्ति स । अतः परमखिन्ना सा युवतिः कांश्चिच्छुक्लवर्णान्केशान्संवाहनकाले तस्याविदितं तेषां मध्यादुत्पाटयामास । साचिन्तयत्—"अन्तः किमप्यस्तु । परं बाह्यतस्ता-

वत्स्वपत्युर्वृद्धत्वचिह्नानि लोकेभ्यो गोप्यानि" इति । या ज्यायसी सा त्वेवमचिन्तयत्—"मे पत्युः शुक्लकेशा भूषणस्थानीयाः" इति । अतो यदा तस्याः संवाहनक्रम आजगाम तदा कांश्चित्कृष्णकेशानुत्पाटयामास । एवमुपक्रान्ते षण्मासात्प्रागेव तस्य तपस्विनः शिरः केशविहीनमजनिष्ट ।

तात्पर्यम् ।

यः सारासारं न वेद तस्य प्रसादादपि हानिरुत्पद्यते। याः स्त्रियो भर्तुर्हितैषिण्यस्तदानुकूल्ये च या बद्धाशयास्तास्तस्याज्ञया विना किमपि नाचरेयुः। यदि काचन स्त्री किमपि हितं पश्येत्तर्हि पतिमादौ निवेद्य तत्कुर्यात् । एवं कृत उभावपि कृतिनौ भवेताम् । एष एव स्त्रीधर्मः ।

---

## कथा सप्तदशी ( १७ )।

### गोष्ठगतस्य शम्बरस्य ।

कश्चिच्छम्बरो व्याधसारमेयैर्निबिडवृक्षसमूहान्निर्वासितो धावन्कस्मिंश्चित्खेटके गोष्ठं विष्ट्वा तृणराशौ निलीय तस्थौ। तद्दृष्ट्वा कश्चिदुक्षा तं वदति—"रे, अत्रागत्य किमारब्धं त्वया । यस्माद्भीत्वा त्वमत्र लीयसे तन्निधनं त्वां सद्य एवागमिष्यतीति मे भाति"। शम्बरस्तानुवाच—"भो मित्राणि, यदि कृपया तूष्णीं क्षणमेकं स्थास्यथ तर्हि जीवितुमाशासे। यथावसरमहमितो निर्गस्ये"। ततः स शम्बरस्तत्रासंध्यमासीत् । संध्यायां प्रवृत्तायां गोपालास्तृणभारान्गृहीत्वा गोष्ठ आगता अपि तं न लक्षयामासुः । ततो गोष्ठाधिकृतः पुरुष एयाय । तेनापि स न लक्षितः । एवं जाते गुरुः प्रहर्षः शम्बरस्यात्मनि न प्रबभूव । स अनडुह आह—" सखायः,

धन्या यूयं येषां कृपयाहं जीवामि। भवादृशाः परोपकारिणः कुत्रापि न दृश्यन्ते"। तच्छ्रुत्वैकोऽनड्वांस्तमाह–"रे त्वमस्मात्स्थलादक्लिष्टः स्वस्थानं गच्छ। एतदेव वयमाशास्महे। ईशप्रसादेनास्य गोष्ठस्य स्वामी नायातु। स शतं नयनानि बिभर्ति। तस्मिन्नागतेऽस्मिन्राशौ तव निलीयावस्थानं दुर्घटमिति मन्ये"। इति तस्य वदत एव गोष्ठपतिः कार्यान्तरेण बहिर्गतो गृहमाययौ। गृहमागत एव गोष्ठमियाय। भृत्यान्संतर्ज्य व्याजहार–"रे राम राम, किमित्येतस्यानडुहोऽग्रे घासो नास्ति। नित्यमहं वो निन्दामि तथापि कथं न लज्जध्वम्। रे सोनक सोनक, अस्योक्ष्णोऽग्रे कांश्चिच्छष्पकवलान्निक्षिप। कथमनार्या इमे भृत्याः" इत्यन्यैः प्रकारैश्च निर्दहन्निव क्रोधताम्रया दृशेतस्ततोऽभिदधानो यावत्समुद्धतं परिक्राम्यति निपुणं च निरीक्षते तावत्तृणराशौ निलीनस्य शम्बरस्य शृंगे तदालोके पतिते। दृष्ट्वैव "अस्मिंस्तृणराशौ शम्बरः शम्बरः। धावत, प्रहरत" इत्युच्चैर्ववार्ट। श्रुते च तद्वचसि लगुडहस्ता भृत्या धावित्वा तं शम्बरं क्षणेनैकेन जघ्नुः।

## तात्पर्यम्।

गृहकार्यस्य यावतीं चिंतां वयं वहामस्तावतीं भृत्या न वहन्ति। भवतु नाम कथमपीति त उदासते। योऽस्मान्बिभर्ति तस्य हितमेव कुर्वीतेति सेवकस्य धर्मस्तेषां हृदयेऽवकाशं न लभते। तेऽजस्रं स्वार्थबुद्धयो भवंति। यस्मिन्कृत आत्महितं सिध्यति तदेव कुर्वते। स्वामिनो हितं नानुलक्षंते। तत्त्वत उन्मार्गगमनेन संपद्धीना जाताः श्रीमन्तो विरलाः।

परं च किंकरवञ्चनादिभिर्मलमल्लकतां प्राप्ताः श्रीमंतो बहवो दृश्यन्ते। अतः स्वामी स्वकार्येष्वप्रमत्तः सन्नोपेक्षेत। केवलं च भृत्येषु न विश्वसेत्।

---

## कथाष्टादशी ( १८ )।

### श्वेहामृगयोः।

भ्रमन्

कश्चिदीहामृगो बहुभिरुपवासैः कृशो भक्ष्यार्थं भ्रममाणः कस्यांचिज्ज्योत्स्नाधवलायां रात्रौ कस्यचित्कृषीवलस्य गोष्ठे मांसलांगमेकं श्वानं ददर्श। कुशलप्रश्नानंतरं स ईहामृगः श्वानमाह—"भोः श्वन्, रुचिरदेहो दृश्यसे। सत्यं वदामि, त्वमिव पीनशरीरो दर्शनीयाकृतिः कोऽपि श्वाद्ययावन्मया नादर्शि। ब्रूहि म एतत्कारणम्। त्वत्तः शतगुणमपि यते, परं कुक्षिपूरमपि भक्ष्यं न विन्दे"। श्वाह—"भो वृक, यथाहं करोमि तथा त्वं करोषि चेत्सुखी भविष्यसि"। ईहामृगः पप्रच्छ—" भोः श्वन्, किं तद्यत्त्वं कुरुषे"। श्वाह—"नान्यत्किमपि। मत्स्वामिनोऽलिन्दमध्यास्य नक्तं चौरान्प्रतिबध्नामि"। वृकोऽवदत्—" सौम्य, एतदहं सर्वभावेन करिष्ये। रे, योऽहं वने भ्राम्यामि, हिमवृष्टी सहे तेन मया छायामाश्रित्य कुक्षिपूरं भक्ष्यं लब्धं चेत्किमन्यदाशास्यम्"। एवं संवदतोस्तयोर्वृकः शुनो गले दामनिर्मितं व्रणमलक्षयत्। तं दृष्ट्वैव स श्वानं पृच्छति—" वयस्य, किमेतत्ते गले दृश्यते"। श्वाह—" आँ, न किंचित्। दुश्चेष्टितोऽहं लोकान्दशामीति दिवा सुप्ते रात्रौ सम्यग्रक्षणं भवेदिति च हेतोर्मे स्वामी मां दिवा दाम्ना बध्नाति। सवितर्यस्तं गतेऽहं मुच्ये।

ततोऽहं राजेव स्वैरं व्रजामि। मम भक्ष्यविषयेऽयं क्रमः। मम स्वामी स्वहस्तेनोच्छिष्टं ददाति। अन्येऽपि गृहवासिनो मनुजा मयि दयन्ते। पात्रेष्वपूपादि शिष्टं चेन्मद्विना कमप्यन्यं न गच्छति। अनेन मे पीनत्वम्। अतोऽहं ब्रवीमि, यदि त्वमहमिव करिष्यसि सुखं विन्दस इति"। एतस्मिन्नवसरे वृकोऽपससार। तं चाह्वत–"रे, एह्येहि। किमपसरति भवान्"। वृको दूरादेव तमाहूय वदति–"रे, तत्सुखं नाभिलषामि। तेऽक्षय्यमस्तु तत्। निरवरोधतास्ति चेन्मया सार्धं कथां कुरु। त्वमिव बन्धमुपेत्य राजापि भवितुं नाशंसे"।

### तात्पर्यम्।

स्वातन्त्र्ये सति निर्धनता वरम्। न पुनः परवत्त्वे सति महत्पदलाभः। यः परवाञ्जायते तस्य प्रज्ञामहत्त्वाधीरतादयो गुणा अकिंचित्कराः संपद्यन्ते। तस्य स्वामिनस्तन्त्रे वर्तनं नियतमेव। स स्वामी यदि हीनकर्मसु योजयति तदपि तेनावश्यमङ्गीकर्तव्यम्।

---

## कथा नवदशी (१९)।

### अजापुष्टस्य मेषस्य।

कस्मिंश्चिदजापुष्टे मेषार्भक एकदा तयाजया समं गच्छति मार्गे कश्चिद्वृकस्तमुवाच–"वत्स, श्रान्तोऽसि त्वम्। नेयं ते माता। तव प्रसूस्तत्र पुरोवर्तिनि यूथे चरति"। मेषशिशुरुवाच–"यत्त्वं वदसि तत्सत्यम्। परं या मामगतिरिति कतिचिन्मासाञ्जठरे दधार, परं प्रसूतेरूर्ध्वं सद्यो माम-



नाथं पृथ्वीतले विसृज्य जगाम तां मातरं यदि वदसि तर्हि

निरतिशयेन प्रेम्णा, इत्येव साधु


कामं वद । परमहमिमामजामेव मातृस्थाने करोमि । कुतः, यतोऽसौ दीनमनाथं मामङ्गीकृत्य स्तन्येन सुतनिर्विशेषं पुपोष । अन्यैरुपायैश्च गोपयामास" । वृक उवाच—"अरे, या त्वां सुषुवे सा ते वन्द्या । निरतिशयं प्रेम तस्यां ते भाव्यम्" । मेष उवाच—" सा मे जनयित्रीति नाहं वदामि । शुक्लवर्णः कृष्णवर्णो वाहं भविष्यामीति या नावागात्सा मे जननकारणमिति सत्यम् । यदि पुंयोनौ सा मामपातयदयं तस्या उपकार एव । यतोऽहं तूर्णं शौनिकस्य हस्ते पतिष्यामि । पश्य तर्हि या केनापि प्रकारेण मयि नोपचकार तामहमियं मातेति कथं ब्रूयाम्" ।

तात्पर्यम् ।

ये हितकर्तारस्त एव पितरः । केवलं जन्महेतवः पितृस्थाने न गणनीयाः । पितरौ बालाश्चान्योन्यं प्रतिपाद्युः । यावद्बाला ज्ञानहीनास्तावत्पितरौ ताँल्लालयेतां पुष्णीयातां च । विद्योपार्जनं च कारयेताम् । अतिलालनं परिवर्ज्य विनयाधानं विदध्याताम् । ततो व्यवहारक्षमैस्तैरपि पितरौ संरक्ष्यौ । अयमेवान्योन्यस्य धर्मः । प्रायो बाला धृष्टा भवन्ति । यौवने पितरौ नानुरुध्यन्ते । एवं पितरावप्यनात्मज्ञौ स्तः । तौ पूर्वे वयसि बालाञ्शिक्षयितुं न यतेते । यथाशक्ति भक्ष्यपेयोपभोग्यानि तेभ्यो न दत्तः व्ययार्थमर्थं च । वयं ज्येष्ठा इति बुद्ध्या यथाकारं कुर्वन्ति । सर्वमेतद्बालाः सहेरन्निति ते मन्यन्ते । तद्दृष्ट्वा बाला अपि मर्यादां जहति । अतः पितृपुत्रैरिष्टामित्रैर्दंपतीभ्यां परस्परस्य हितमेव करणीयम् । एवं कृते प्रेमदार्ढ्यं भवति । प्रेमशून्यं सबन्धित्वं नाममात्रम् ।

# कथा विंशी ( २० )।

## स्वरकार्कश्ये विषीदतो मयूरस्य ।

एकदात्मनः स्वरः कर्कश इति मयूरोऽनल्पं विषसाद । स भगवन्तं नारायणं ययाचे–" भो भगवन्, कारुण्यनिधे दीनदयालो, सौन्दर्ये केनाप्यनभिभवनीयोऽहं कोकिलेन स्वरविषये पराजीय इति दुःखतरम् । पश्य कोकिले कूजति सर्वोऽपि जीवलोकस्तस्य कूजने कर्णं दत्ते । कूजितुं मुखेऽपावृते मामुपहसन्ति" । तां मयूरप्रार्थनां श्रुत्वा भगवान्वैकुण्ठस्तं समादधाति–" भद्र, यथा स्वरविषये कोकिलं सुखिनं मन्यसे तथा सौन्दर्ये महत्त्वे च त्वमपि"। मयूरो भणति–" भगवन्, यदि स्वरे माधुर्यं नास्ति किं मुधा सौन्दर्येण " । देव उवाच–" अरे, एकैकं प्रत्येको गुणोऽदायि । तुभ्यं सौन्दर्यम्, गरुडाय बलम्, कोकिलाय स्वरमाधुर्यम्, शुकाय मनुष्यवाक्, पारापताय शान्तिरिति । इमे पक्षिणो यथा स्वेन स्वेन गुणेन संतुष्टास्तथा त्वयापि भाव्यम् । नो चेदाशाबद्धो भूत्वात्मानं व्यर्थं खेदयिष्यसि"।

### तात्पर्यम् ।

एकः सर्वगुणसंपन्नो भूयादितीश्वरेच्छा नास्ति । अतो योऽनेकगुणेष्वासक्तो भवति स तेषामप्राप्तौ विषण्णो न भवेत् । वर्तमानगुणान्नानाद्रियेत । परिश्रमं कृत्वा त एव वृद्धिं प्रापयितव्याः । चित्तसमाधिरेव सर्वगुणसमधिगमफलम् । स एव समाधिर्यावल्लभ्यवस्तुभिरधिगतश्चेदिह यत्सुखं मानुषगम्यं तसेन लब्धं भवति ।

## कथैकविंशी ( २१ )।

### जम्बूकद्राक्षाफलानाम् ।

कश्चिज्जम्बूकः क्षुत्क्षामकण्ठः परिभ्रमन्द्राक्षामण्डपमभ्यैत्। तत्रागत्योर्ध्वं विलोकयता तेन बहवो दर्शनीयाः पक्वफलानां स्तबका लम्बमाना अदर्शिषत । परं च मण्डपस्योच्छ्रिततयैकमपि फलं न विविन्दे । उत्पतंस्तु शश्राम । अन्ततः कियद्दूरं गत्वा पश्चाद्द्राक्षामण्डपे दृष्टिं विधाय भर्त्सनापूर्वमिदमाह—" गृह्णातु नाम कोऽप्येतानि फलानि । अहं त्वपक्वान्यम्लानीति संत्यज्य गच्छामि" ।

तात्पर्यम् ।

केचन पुरुषा अलभ्यवस्तुनि कमपि दोषमारोप्यात्मनो लघिमानं छादयन्ति ।

---

## कथा द्वाविंशी ( २२ )।

### उरगलोहमार्जन्योः ।

कश्चिदुरगो व्योकारस्य पण्यशालामुपेत्य खाद्यार्थमितस्ततोऽन्विष्यंस्तत्र लोहमार्जनीमदर्शत् । तां धृत्वा चर्वितुं प्रववृते । तदा लोहमार्जनी तं तर्जयन्त्याह—" भो मूढ, मां मुक्त्वान्यतो याहि । अहं लोहं कालायसं च चर्वामि । मां चर्वतस्तव दतां भङ्ग एव जायते" ।

तात्पर्यम् ।

शत्रोर्बलाबलं परीक्ष्य तदुपद्रवे मतिः करणीया । यं सर्वे संमानयन्ति, यदुक्तमाचरन्ति, तेन साकं विरोध आत्मनो नाशाय भवति । तथैव प्रज्ञाबलेन यदि महतां कुत्सा विधीयते तर्ह्यात्मनो मौर्ख्यं स्फुटं भवति ।

## कथा त्रयोविंशी ( २३ )।

### अजशृगालयोः ।

कश्चिच्छृगालः पानीयं पातुं कामपि वापीं गतो जले ममज्ज । तेन बहिर्निर्गन्तुं बहवो यत्ना अकारिषत परं वन्ध्यप्रयत्नो जज्ञे । अत्रान्तरे कोऽप्यजस्तत्रागत्य तमन्वयुजत्—"अपि मधुरं जलम्" शृगाल उवाच—"मधुरमिति किं वच्मि । केवलं पीयूषमेव । पायंपायं मे वाञ्छा न निवर्तते । न शक्नोम्येतद्धातुम्"। तन्निशम्याजोऽन्तः प्रविवेश । तदैव तस्य दीर्घशृङ्गेषु पदं निधाय शृगालो बहिरगात् । अजस्तु मज्जनोन्मज्जनेऽसकृदनुभूय ममार । ने असकृत

#### तात्पर्यम् ।

"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति सर्वत्र फलति । यद्यल्लोक आचरति तत्र तत्र स्वार्थानुष्ठानमस्त्येव । परहिताय यतमाना विरलाः । अतो यः कोऽपि प्रलोभयति तस्य सत्यव्रतत्वं सम्यगनिश्चित्य विश्वासं नेयात् ।

---

## कथा चतुर्विंशी (२४)।

### भुजंगमग्राम्यपुरुषयोः ।

कश्चिद्ग्राम्यः पुरुषो हेमन्ते निष्कुटे किमपि कर्म कुर्वाणः प्राचीराभ्यासे हिमोद्वेजितं विकलाङ्गं संश्यानं मुहूर्तेन मुहूर्तार्धेन वा म्रियमाणमेकं भुजंगममैक्षिष्ट । तमीक्षित्वा स पुरुषो दयायत्तचित्तो भूत्वा गृहमनैषीत् । नीत्वा च चुल्लीसविधे न्यधात् । तत्र वर्तमानः स तापयोगात्कतिभिः पलैर्लब्धसंज्ञः सफूत्कारं तस्य ग्राम्यपुरुषस्य पुत्रदारानुद्दिश्याधावत् । ततो महान्कोलाहलः समजनि । कलकले संप्रवृत्ते स

पुरुषः कुठारहस्तस्तूर्णमेत्यैकेनैव प्रहारेण तं चक्षुःश्रवसं द्विधा चकार । प्रहरन्निदमब्रूत—" रे पापाशय, निधनोन्मुखे त्वयि यस्तुभ्यमसूनदित तस्मै किमिदं प्रतिदानम् । तव मरणं तु युक्तमेव । अपि च मरणादप्यधिकं दण्डं त्वमर्हसि" ।

तात्पर्यम् ।

यो हितकर्तारं द्वेष्टि तथा चान्नदातारमपकर्तुमुद्युङ्क्ते स कृतघ्नो महान्पापः । तस्य मरणमेव श्रेयः । तस्य मुखावलोकनमपि न कुर्यात् ।

---

## कथा पञ्चविंशी ( २५ )

### प्रसूतिवेदनार्तगिरेः ।

कश्चिद्गिरिरार्तस्वरान्मुमोच । तानाकर्ण्य समीपस्थाः केचन दूरस्था अपि नराः समीयुः । तस्योदरात्किमपि महार्हं वस्तु निर्गमिष्यतीति चिराय प्रतीक्षांचक्रिरे । अन्तत एक आखुस्तस्मादुदपतत् ।

तात्पर्यम् ।

केचन पुरुषाः प्राप्ताधिकारा वयं नैकप्रकारैर्जनताहितं विधास्याम इति महान्तमाटोपं दर्शयन्ति । जना अपि तेषामाटोपं दृष्ट्वा तान्विश्वसन्ति । ते तु प्राप्ताधिकाराः सन्तः स्वार्थं साधयित्वा जनताहितं किमपि नानुतिष्ठन्ति ।

---

## कथा षड्विंशी ( २६ ) ।

### मक्षिकापिपीलिकयोः ।

एकदा स्वस्वमहत्त्वविषये मक्षिकापिपीलिकयोर्महान्संघर्षः समपादि । मक्षिका पिपीलिकामवादीत्—" अये, मम मह-

त्वद्विषये न कोऽपि संदेग्धि। पश्य। यागादिषु यद्वस्तुजातं संचीयते तत्प्रथममहमास्वादे। ततो देवताः। देवमन्दिरेषु यदुत्तमं स्थानं तन्मदीयम्। तत्र यावती मे स्थितिस्तावती न कस्यापि। राजसभां यातीं न कोऽपि मां प्रतिबध्नाति। अहं राज्ञोंऽसे निषीदामि। स्वैरमहमायासैर्विना यथेप्सितं भक्षयामि पिबाम्युपभुनज्मि च। एवंविधया मया सहातीव दीना त्वं सादृश्यं कथमीप्ससि"। पिपीलिका निखिलं तद्वचोऽवधार्य प्रत्युवाच–" अये, अपि शृणोषि। महतां गृहेऽभ्यवहारो भूषणं सति निमन्त्रणे। परं लोकैर्धिक्कृता निःसारितापि त्वं पात्रान्निस्त्रपा सती न निष्क्रामसि। त्वं प्रगल्भं वदसि यदहं राजकुले व्रजामि, राज्ञोंऽसे वसामीति। तत्रापि शृणु। मिथ्यावादोऽयम्। यतोऽहं पूर्वमेकदा धान्यकणानादाय गृहं प्रस्थिता युष्मज्जातीयामेकां यन्नाम ग्रहीतुमपि वाङ्न प्रसरति तादृग्वस्तुनि समासीनां तदास्वादनलोलुपामद्र्लोकम्। यत्त्वमात्थ देवमन्दिरेऽहं चिरं वसामीति तदप्यवधारय तस्य हेतुम्। न ते गृहम्, न कश्चिदुद्योगः। अतः कालं नेतुं त्वं तत्र वससि। त्वमहमिव निदाघकाले धान्यं न संगृह्णासि। अतो हेमन्ते निरशनेन म्रियसे। वयं तूद्यमिन्योऽतस्तेष्वेव दिवसेषु खाद्यपेयैरुष्णगृहनिवासेन च सुखं जीवामः"।

### तात्पर्यम्।

उद्यमानां नैकविधत्वं दृश्यते। केचनोद्यमा अफलाः सन्ति। यान्कुर्वाणाः प्रगल्भं भाषमाणाः पुमांसः श्रोतृनुद्वेजयन्ति। अपरे त्वेवंविधाः सन्ति यत्तेषां कर्ता यत्र यत्र गच्छति

तत्र तत्र प्रियो भवति । कार्यार्थं राजसभां कोऽपि गच्छतु नाम । परं यो निरुद्योगः कालयापनार्थं तत्र गच्छति स तज्जनितगौरवं न वर्णयेत् । ये दम्भार्थं देवतार्चनस्याडम्बरं दर्शयन्ति का तेषां भक्तिः। यो गृहे तुषयुतान्धान्यकणानपि न प्राप्नोति तस्य महद्भिः सार्धं घृतपायसाद्यन्नलाभे किं महत्त्वम्। स एव महान्य उद्यमी स्वहस्तार्जितसंपदं भुनक्ति यश्चालसानवधीरयति । एतादृशो नोपपदैर्विनापि मान्यो भवति।

---

## कथा सप्तविंशी ( २७ )।

### वृद्धशुनः ।

कश्चित्कुक्कुरस्तारुण्ये मृगयायां सेवादक्षो भूत्वा स्वामिनं बहुतोषयत् । तदा स्वाम्यपि तं सादरं चुचुम्ब । तं समवीवहत् । स्वादु खाद्यमदात्। गतासु कासुचित्समासु स जीनस्तं यथापूर्वं सेवितुं नाशकत् । एवं स्थितेऽप्येकदा स्वामिनं मृगयादरेणानुसरंस्तत्कालानुगतमृगदंशकानामग्रेसरो भूत्वैकं मृगं पदेऽधार्षीत् । परं दन्तहीनत्वात्स्खलितशिष्टानां दतां चलत्वाच्च दृढं निग्रहीतुं न शशाक । मृगोऽत्रान्तरे स्वमोचनाय यतित्वा पलायिष्ट । तद्दृष्ट्वा तत्स्वामी क्रुधा रक्तापाङ्गो लगुडमुद्यम्य तं प्रहर्तुमभिससार । तं सारमेयो बभाषे—“ रे अधम, क्षणं तावदुद्यतं लगुडं प्रतिसंहर । अहं तव चिरंतनो भृत्य इति विदांकुरु। मृगो गत इति न मे दोषः । नोपेक्षितं मया, तस्य ग्रहणे यथाशक्ति यतितम् । परं यत्र मे नास्त्युपायस्तत्र किमहं कुर्वे । इदानीमहं वृद्धः पूर्ववत्त्वां सेवितुमसमर्थश्च। यद्येष ते क्रोधहेतुस्तर्हि पूर्वसेवां स्मृत्वा तमपनय”।

तात्पर्यम् ।

स्वामिनः प्राय एवं कृतघ्ना दृश्यन्ते । यावद्वयं सेवाविधावनलसास्तावदात्मीयतां प्रकटयन्ति । सेवायां शैथिल्ये दृष्टे सद्यो दुर्जनायन्ते । तथाह्यसदुपकृताः केचिदधमाः पूर्वकृतानुपकारान्विस्मृत्य ततो वयं नोपकुर्मोऽल्पान्वा कुर्म इति प्रतीपमस्मानपकर्तुं यतन्ते ।

---

## कथाष्टाविंशी ( २८ )।

### सगदचिल्लस्य ।

कश्चिच्चिल्लश्चिरं रुग्णो मुमूर्षुरभवत् । ततः स आत्मनः पूर्वकर्माणि स्मारंस्मारं साध्वसबद्धवेपथुर्मातरमवदत्—"भो मातः, कैश्चिद्व्रतैर्नियमैरुपवासैरन्यैश्च भक्तिप्रकारैर्देवमनामयं मदर्थं याच"। माता प्रत्यब्रवीत्—"जात, देवः प्रार्थितोऽपि त आरोग्यं दास्यतीति न मे भाति । यतस्त्वं जन्मनः प्रभृति हिंसापरः । अन्यच्च देवताभ्योऽर्पितानां बल्युपहाराणामपहारान्न व्यरंसीः । नापि ते कदाप्यनुशयो जातः । एवं वर्तमाने कथं नामाहं देवं त्वद्गदनिवृत्तयेऽभ्यर्थये"।

तात्पर्यम् ।

मृत्युसमये "पापोऽहम्, पापकर्माहम्, का मे गतिःस्यात्" इत्येवंविधायाश्चिन्तावशतायाः पूर्वमेव समाहितेन पुंसा भाव्यम् । शक्तिवैक्लव्यात्पापकर्माचरणे यदसामर्थ्यं जायते ततश्च यः पश्चात्तापो भवति सोऽलीकः । पश्चात्तापं विना देवो न क्षमते । यतोऽलीकानुशायिनो देवः क्षमेत चेत्पापनियमनं कथं भवेत् । अत आत्मनोऽन्तः सुखेन भवनीय

इति यो वाञ्छति स पूर्वमेव दुष्कर्माणि दूरतः परिवर्जयेत् ।

---

## कथा नवविंशी ( २९ ) ।

### शशमण्डूकानाम् ।

एकदा प्रबलवाते वाति सति तज्जनितक्षोभवशात्समस्तमहीरुहेषु कम्पितेषु सत्सु, भूतलगतशुष्कपत्रेषूत्पतितेषु सत्सु, सर्वासु दिक्षु पांसुच्छन्नासु सतीषु कामपि वृतिमाश्रयन्तः शशाः परमया भीत्येतस्ततो दुद्रुवुः । महतायासेन वृतिमुल्लङ्घ्य प्राणरक्षणपराः ग्लायमानाः पुरतो महतीमापगामद्राक्षुः । तदा निर्विण्णमनसोऽन्योन्यमूचुः—“ अहो कीदृशीयं विपत्परंपरा । यत्र यत्र व्रजामस्तत्र तत्रास्माननुप्रधावति सा । वरं तर्हि मज्जनं कृत्वा प्राणत्यागः । न पुनरीदृशेषु व्यसनेषु कालयापनम् ” । एवं संप्रधार्य सर्वेऽवारं तीरमासेदुः । तत्र बहिर्निर्गतास्तीरे वर्तमाना भेकास्तान्वीक्ष्य जल उत्पेतुस्तले ममज्जुश्च । तदेकेन वृद्धशशेनादर्शि । स तानङ्गुल्या निर्दिश्य सखीनाबभाषे—“ भो मित्राणि, भीरुखिलानाक्रम्य तिष्ठति । यद्येवं तर्हि किमस्माभिः प्राणास्त्याज्याः । कुतो धैर्यमवलम्ब्यापतितानि दुःखानि सहित्वा व्यसनं प्रत्यभिमुखैर्न भूयते ” । तच्छ्रुत्वा सर्वे धैर्यमालम्ब्य तत्रैवावतस्थुः । एवं कृते कतिपयैर्मुहूर्तैर्वात्या शशाम । ते च स्वस्था अभूवन् ।

### तात्पर्यम् ।

केचन पुरुषा नानाविधानि साध्वसानि प्रकल्प्य “ हा



हा कथं भवेत्, का गतिः स्यात् ” इति नक्तंदिनं चिन्तयन्तः

कालं नयन्ति । वयमेवाखिलानां दुःखानां भाजनानीति तेषां प्रतिभाति । इतरत्र सर्वे सुखिन इति च मन्यते तैः । परं यांस्ते सुखभाजो मन्यन्ते तेषां दुःखानि यद्युदीक्षेरंस्तर्हि वयमेव कृतिन इति ते मन्येरन् । भगवता विश्वसृजा सुखदुःखयोरंशा यथाभागशः सर्वेभ्यो दीयन्ते ।

---

## कथा त्रिंशी ( ३० )।

### सिंहमूषिकयोः ।

कश्चित्सिंहो ग्रीष्मसमये वने प्रच्छायशीतले चूततले सुखं सुष्वाप । तत्र बहवो मूषिकास्तमर्दयामासुः । तैरुपद्रुतः प्रबुध्य यावदितस्ततो विलोकयति तावदेकं मूषिकमैक्षिष्ट । तं करे धृत्वा यावद्विदरिषति तावत्स मूषिको दैन्यपरीतः सप्रश्रयमूचे—" भोः स्वामिन्, विक्रान्तस्त्वं मृगाधिपः। अहं तु भवत्पुरतोऽतीव रङ्कः । किं मेऽस्वात्मनः करं दूषयसि। मे प्राणदानमेव स्वाम्यर्हति"। एतानि चान्यानि करुणावचनानि श्रुत्वा सिंहो दयांचक्रे तं चामुचत्। कालेन स एव सिंहो वनेऽटंस्तस्यैव चूतवृक्षस्य निकटे मृगयुप्रसारिते जाले निपपात । तदाखिलसारव्ययेनाप्यात्मानं मोचयितुं न शशाक । ततो निराशो भूत्वोज्जगर्ज । श्रवणपथगतायां तस्यां गर्जनायां पूर्वोपकृतो मूषिको द्रुततरमागत्य जगाद—"राजन्, न भेतव्यं न भेतव्यम् । अयमस्मि किंकरः । स्वस्थ एधि" । एवमुक्त्वा स्वदद्भिर्जालग्रन्थीनाशु चिच्छेद । सिंहं च मोचयामास ।

### तात्पर्यम् ।



प्रभूणामल्पैरपि प्रयोजनमस्त्येव । अल्पा अपि महत्कार्ये

साधयन्ति । अतः प्रभव आत्मभुजपालितेषूपजीविषु दयामेव कुर्युः । यतो नीचा अप्युपकुर्वन्ति । वैभवमशाश्वतमिति सिद्धान्तश्चेदखिलैर्ऋजुतया किं न वर्तितव्यम् । अभ्युदये यदि वयं जनानुपकुर्याम तर्हि जना अपि विपद्यस्मानुपकुर्युः । यद्यपि सर्वे कृतज्ञा न भवन्ति तथापि तेषां कश्चिदुत्पद्येत यस्य साहाय्येनास्माकं संकटानि नश्येयुः ।

---

## कथैकत्रिंशी ( ३१ ) ।

### मूषकेण सिंहकन्यापरिणयस्य ।

पूर्वप्रस्तावे निरूपितः सिंहो जालान्मुक्तः प्रसन्नवदनश्रीको मूषकं जगाद—"भो मूषक, वलवदुपकृतोऽसि त्वया । ईप्सितं वृणु । ते दास्यामीति मे निश्चयः" । अनेन गर्वितः स मूषकः "कोऽहम्, का वा मे योग्यता, किं मया याचनीयम्" इत्यविचार्य सिंहं व्यज्ञापयत्—"यतस्तुष्टः स्वामीप्सितं वृण्विति वक्ति ततोऽहं निर्भीको याचे, यत्स्वामिनात्मनः कन्या मे दातव्येति" । तद्वच आकर्ण्य सिंहो दुर्मना जातः । परं किं करोति । पूर्वमेव प्रतिश्रुतं तेन । अतः "दत्ता मया ते कन्या" इत्युदीर्य दुहितरमह्वास्त । यौवनमदमन्थरगमनाया आगतायास्तस्या आकस्मिकेन पदाघातेन स मूषकः पञ्चत्वमाप ।

### तात्पर्यम् ।

सारासारविवेकशून्यः पुरुषोऽप्राप्यवस्तुनि बद्धस्पृहो निर्वेदेनाक्रम्यते । सारासारविवेकहीनः सम्राडपि निर्वृतिमान्न भवति । साम्राज्येऽपि रङ्कभोग्यानि संकटान्यनुभवति । सारासारविवेकपूर्णास्तु रङ्का अपि संपत्सुखान्युपभुञ्जन्ति ।

सारासारलक्षणं त्विदमेव यत्पुरुषेण "कोऽहम्, का वा मे योग्यता, कथं वा मया वर्तितव्यम्" इति सम्यग्विचारणा विधेया ।

---

## कथा द्वात्रिंशी (३२)।

### काननकाष्ठच्छिदोः ।

कश्चित्काष्ठच्छिदेकदा वन आसीनः समन्ततो विलोक्य परिदेवितुमारेभे । तं विलपन्तं वीक्ष्य तद्वनतरवस्तमप्राक्षुः—"किं तवाभिप्रेतम्" इति । सोऽब्रवीत्—"मम कुठारस्य नालं नास्ति । अतो यद्यनतिदीर्घं काष्ठखण्डं लभेय तर्हि साधुतरं स्यात्" । तदा सर्वे तरवः समेत्य तस्मै कृपया चिञ्चालगुडशकलं ददुः । काष्ठच्छित्तं कुठारे संयोज्य सर्वान्वृक्षान्निर्विशेषं लुलाव । ततः शालवृक्ष इतरानूचे—" भोः सखायः नान्योऽत्र वाच्यः । स्वयं कृत एवायं नाशः" ।

### तात्पर्यम् ।

शत्रौ दयमानो यः कश्चन तत्साचिव्यं करोति स पश्चात्तप्यते शत्रुषूपकारस्तदपराधक्षमा च पुंसो महिमानमाप्नोति । अवितथं खल्वेतत् । तथापि यत्कृत्वा रिपुर्बली भूत्वात्मानमेव पीडयितुं यतिष्यते तत्करणं बालिशत्वमेव ।

---

## कथा त्रयस्त्रिंशी ( ३३ )।

### अश्वसारङ्गयोः ।



कश्चिदश्वो सारङ्गश्चैकस्मिन्केदारे नित्यं चरतः । एवं

स्थित एकदा तौ कलहपरौ बभूवतुः । स सारङ्गः शृङ्गबले-न तमर्वन्तं मालाद्बहिर्निरवासयत् । ततः सारङ्गं विनेतुम-नाः सोऽर्वा कंचिन्मनुजमाससाद, तत्साहाय्यं च ययाचे । स मनुजस्तस्य पृष्ठे पर्याणमारोप्य मुखे खलीनं दत्त्वा तमा-रुक्षत् । गतिपरीक्षाविधौ कशयाप्यभिजघान । अर्वता सर्व-मेतत्सोढम् । तस्य साहाय्येन च सारङ्गमजैषीत् । पश्चान्म-नुजं बभाषे—" भो मनुज, बलवदुपकृतोऽस्मि । सिद्धं मे समीहितमधुना । पर्याणखलीनेऽपनीय मां गन्तुमनुज्ञातुम-र्हसि" । एतन्निशम्य मनुजस्तं बभाण—"भोऽर्वन् तवैतावा-नुपयोग इति नाहमज्ञासिषम् । इदानीं दूरत एव ते बन्ध-नान्मुक्तिः " ।

### तात्पर्यम्

यदैकं विनेतुमन्यं प्रति कश्चिच्छरणमुपैति तदा स दृढं विविच्य तत्कुर्यात् । यतो बलिनो ग्रहादवश्यं मुच्य इति निश्चेतुं न कोऽपि समर्थः ।

---

## कथा चतुस्त्रिंशी ( ३४ ) ।

## ग्राम्यनागरिकमूषिकयोः ।

कश्चिदृजुस्वभावो ग्राम्यो मूषिक आसीत् । तस्य गृह एकदा कश्चनापरो दर्शनीयाकृतिः पीनशरीरो नागरिकमूषिक आयात् । पूर्वसंस्तववशात्स ग्राम्यो मूषिकस्तं परमप्रीत्याति-थिवदुपाचरत् । बिलगतैर्भक्ष्यपेयैः क्षेत्रमध्यादुपानीतैः कोम-लगोधूमकणिशैः कलायपुटैः पूर्वसंगृहीतैरपूपशकलैश्च तं सं-तोषयामास । एवं ग्रामसाध्यैर्बहुभिर्वस्तुभिरुपचरितोऽपि स



तुष्टिं नापत् । ततः कालेन स नागरिको ग्राम्यमुवाद—

"तात, यदि भवते रोचते तर्हि विशङ्केन मनसा किंचिदुच्यते मया। तदवहितो भव। कथं भवानस्मिन्मलिने स्थले निवसति। इदमरण्यम्। इतस्ततस्तृणवृक्षव्रततिविषमाद्रिनिर्झरैर्विना न किमपि दृग्गोचरं भवति। अत्रत्येभ्यः पक्षिविरावेभ्यो मानुषशब्दा न किं सुखतराः। अस्मान्निर्जनप्रदेशाद्राजधानी न किं सुखावहा। तर्हि मद्वचनमङ्गीकृत्य नगरं प्रतिष्ठस्व। तत्र भवान्सुखं वत्स्यति। अलं विचार्य। द्रुततरमागम्यताम्। क्षणिकोऽयं संसारः। अत्र लब्ध एकोऽपि मुहूर्त आनन्देन नेतव्यः" इत्येतान्यन्यानि चैवंविधानि तस्य व्यामोहकवचनानि श्रुत्वा स जरठो ग्राम्यमूषिको मुमोह। ततस्तावुभौ नगराय प्रास्थिषाताम्। निशामुखे नगरं विविशतुः। अदूर एव किंचिद्धर्म्यं ददृशतुश्च। तत्र पूर्वदिन एव विवाहमङ्गलं निर्वर्तितमासीत्। तन्मन्दिरं प्रविश्य कोष्ठागारं जग्मतुः। तत्कोष्ठागारं नानाविधभोज्यैः पूर्णममानुषं चासीत्। एवं दृष्ट्वा स ग्राम्यो हृष्टमना बभूव। स नागरिकस्तमुवाच—"भो महत्तर, अस्याः शालाया मध्य उपविशतु भवान्। अहमेकैकशः पदार्थानानयामि। तानास्वाद्य रसभेदः सर्वेषां मह्यं निवेदनीयः"। एवमुक्त्वा नागरिकः प्राघुणिकं प्रत्येकैकं वस्तु फलानि मोदकापूपादीनि च क्रमशोऽदात्। सोऽपि तानादाय नेत्रे निमील्य तानास्वादयन्नास्ते। आस्वादनकाले च "अहह कियत्यस्य माधुरी" इत्युदीरयति स्म। एवं द्वित्रान्मुहूर्तान्यापयित्वा यावदवलोकयतस्तावत्कश्चित्पुरुषस्तत्रागत्य कोष्ठागारस्य द्वारमुद्घाटयत। ततः संभ्रमेणोभावपि कोणे निलिल्यतुः। एतस्मिन्नेव काले

द्वौ स्थूलवपुषावोतू तत्रागमताम्। उच्चै रुरुवतुश्च। तं विडालशब्दं श्रुत्वा ग्राम्यस्य हृदयं भयकम्प आक्रमत। स मन्दं तं नागरिकं प्रावोचत्—"भो नागरिक, यद्येवंविधं ते सुखं तत्तुभ्यमक्षय्यमस्तु। ग्राम एव मे श्रेयान्। तत्र गताः क्षेत्रोद्धृताः शिम्बिका वरम्, न चात्रत्यं सोद्वेगमपूपमण्डकास्वादनम्"।

तात्पर्यम्।

व्ययभोगपर्याप्तधनवत्त्वे निराबाधत्वे च ग्रामवासोऽपि गरीयान्। नैकविधाधिव्याधिपरिगतो भोगविलासैरप्युपेतो नगरवासोऽकिंचित्करः। कोऽप्याशङ्केत—" एवं सुखप्रदे ग्रामवासे किमिति लोका नगरवासमङ्गीकुर्वन्ति "। तद्धेतुं शृणुत। नगरवासमूलान्यनेकानि भवन्ति। केचिद्राजसेवार्थम्, अन्ये वाणिज्यार्थम्, अन्ये गुणिजनसमागमार्थं च नगरे वसन्ति। अन्ये तु पूर्वजानुरोधेन सुहृदनुरोधेन च नगरे वासं रचयन्ति। नगरं हि संपदागमस्थानम्। अतः केचिद्विद्वांसो नगरवासं हितं मन्यन्ते। ते वाञ्छन्ति—"इयत्परिमाणं द्युम्नं संचितं चेत्स्वग्रामं गत्वा सुखं निवसामः" इति। अन्ये केचिद्यावज्जीवं दीर्घायासैर्धनमुपार्जयन्ति। इच्छन्ति च—" वार्धके नगरं हित्वा कस्मिंश्चिन्नदीतीरे पुण्यग्राम आयुःशेषं नयामः" इति। एवं च नगरवासिषु न कोऽपि लभ्यते यो ग्रामवासं नाभिकाङ्क्षति। पुराणैर्महासूरिभिरप्युच्यते यन्मनःशान्तये पुण्यकर्माचरणायानामयोपभुक्तये च विजनवास एव साधीयान्। नान्यत्साधनम्।



---

## कथा पञ्चत्रिंशी ( ३५ )।

### पल्लीखनकयोः ।

केनचित्प्रायोपवेशितेन कृशेनाधोगन्त्रा कुशूलैकप्रदेशे छिद्रं कृत्वा तदवेशि । तत्र यथेष्टधान्यलाभात्स्वल्पैरेवाहोभिर्हृष्टपुष्टाङ्गोऽभवत् । एकदा स बहिर्निर्गन्तुं येते । परं तु तस्य पीनशरीरं तस्मादल्पच्छिद्राद्बहिर्नाययौ । तद्दृष्ट्वाराद्भिवर्तमानयैकया पल्ल्याभिहितम्—"भोः सुहृत्, एतस्मात्स्थलान्मोचयितुकामश्चेद्भवानेक एवोपायोऽस्ति। पूर्ववत्कृशो भव । कार्श्ये धृते दिष्ट्यात्मानं मोक्ष्यसि । नान्यथा" ।

### तात्पर्यम् ।

यो दारिद्र्यात्संपन्नत्वं याति स प्रायो दारिद्र्योपभोग्यानि सुखानि नाश्नुते । दारिद्र्येऽपि कानिचित्सुखानि सन्ति यानि श्रीमत्त्वे नैवोपलभ्यन्ते । श्रीमन्तोऽनेकैरुपाधिभिरावृतास्तिष्ठन्ति । यस्य त उपाधयोऽनभिमतास्तेन श्रीरपि त्याज्या अयमेव सुखोपलब्धिमार्गो नान्यः ।

---

## कथा षट्त्रिंशी ( ३६ )।

### उदरावयवानाम् ।

एकदा हस्तपादाद्यवयवा अचिचिन्तन् । यद्वयं श्राम्यामः संगृह्णीमश्च । किं तर्हीदमुदरमायासानकृत्वा सुखं खादति । यदद्ययावज्जातं तदस्तु नाम । अद्यप्रभृतीदं श्रमित्वात्मनो भर्म कुर्यात् । नास्माकमनेन प्रयोजनम् । एवं सशपथं सर्वे निश्चिक्युः । हस्तावूचतुः—"यद्यस्योदरस्यार्थेऽङ्गुलिमपि चालयेव, त्रुट्यन्तु नोऽखिलाङ्गुलयः" । मुखमुवाच—" अहं

शपथं करोमि । यद्यस्यार्थं एकं ग्रासमपि गृह्णामि कृमय आक्रामन्तु माम्" । दन्ता ऊचुः—"यद्यस्य कृते ग्रासं चर्वामः, भङ्ग उपेत्वस्मान्" । एवं शपथेषु कृतेषु यो निश्चयोऽकारि तस्य पालनमावश्यकं बभूव । एवं जाते सर्वेऽवयवा अशुष्यन् । अस्थिचर्ममात्रमवाशिनष्ट । तदा "न साधुकृतमस्माभिः" इति सर्वेषां चक्षुषी उन्मीलिते । उदरेण विना वयमगतिकाः । तत्स्वयं न श्राम्यति परं यावद्वयं तस्य पोषं विदध्मस्तावदस्मादस्माकं पोषणं भवतीति सर्वे सम्यगज्ञासिषुः।

तात्पर्यम् ।

कस्मिंश्चित्काल एकस्यां राजधान्यां चिरयुद्धप्रसङ्गाद्राज्ञः कोशागारे द्युम्नसंकोचे समुत्पन्ने स राजा प्रजाभ्यो बलिमग्रहीत्। तत्प्रजा नाभ्यमंसत। ता उपद्रवोऽयमिति गणयित्वा नगराद्बहिरावासमरीरचन् । तत्र वर्तमानाभिस्ताभिः संहतिः कृता।ता मिथोऽमन्त्रयन्त—"वयं क्लिश्नीमः । राजा त्वस्मत्किमिति मुधा गृह्णाति। अतःपरं न वयं राज्ञे किमपि दास्यामः" इति सर्वा निश्चिक्युः । तेषामेतं निर्णयं संप्रधार्य राजात्मनोऽमात्यं तान्प्रति प्रैषिषत् । सोऽमात्यः प्रजाभ्य उदरावयवानामेनां कथां निवेद्य तासामानुकूल्यं प्रापत् । राजा प्रजाश्च सुखमन्वभूवन् । यदि वयं राज्ञे भागधेयं न दद्याम तस्य व्ययोपयोगाय धनं न शिष्यते । एवं समापतिते तस्करा बद्धपरिकरा दिवापि लुण्ठनं विधास्यन्ति । एकोऽन्यं नानुरोत्स्यते मर्यादातिक्रमः प्रमाथाश्च भूत्वा राजा प्रजाश्च सममेव नङ्क्ष्यन्ति ।

## कथा सप्तत्रिंशी ( ३७ )।

## टिट्टिभीशावकानाम् ।

काचिट्टिट्टिभ्येकस्मिन्क्षेत्रे नीडं कृत्वोवास । यदा तत्क्षेत्रं पक्कमभूत्तदा सा चिन्तयाक्रम्यत । साह—"मे शावका नातिपरिस्फुटपक्षाः । यद्यस्य क्षेत्रस्य स्वाम्युड्डयनाक्षमेष्वेषु सस्यलवनं कारयेत्का मे गतिर्भवेत्" । ततः प्रभृति प्रत्यहं यदा साहारसंचयनाय बहिर्जगाम तदा सा शावकानादिक्षत्—"मम परोक्षे यद्यत्कोऽप्यत्रागत्य वदति तत्सर्वं गृहं प्रत्यागतायै मह्यमाख्यातव्यं युष्माभिः" इति । कदाचित्तस्य क्षेत्रस्य स्वामी पुत्रद्वितीयः क्षेत्रमायाय तमभिदधे—"पुत्र, लवनयोग्यमिदं क्षेत्रम् । याहि । श्वः प्रातरस्य लवने सहाया भवितुमर्हथेतीष्टाप्तजनान्विज्ञापय" । एतच्चे शावकाः प्रत्यागतायै मात्रे यथावन्निवेदयामासुः । सकिलकिलं तां परिवृत्य "झटिति नयास्मानितोऽन्यत्स्थलम्" इति ययाचिरे । मातोवाच—"बालाः, स्वस्थाः स्त । यथा क्षेत्रस्वामी सस्यलवनविषये प्रातिवेश्येष्विष्टाप्तेषु च विश्वसिति तथाहं दृढं जाने सस्यलवनं श्वो न भविता" इति । अन्येद्युर्यदा सा बहिर्जगाम तदा पूर्ववत्तानादिदेश । अतस्ते क्षेत्रपतेरुक्तिं प्रति बद्धावधानास्तस्थुः । स क्षेत्रमागम्याहूतानपेक्षांचक्रे परं कोऽपि नायात् । अन्यच्च मध्यमह्नः सवितारूढः । अतः स सूनुमचकथत्—"पुत्रक, इष्टाप्तप्रातिवेश्येषु विश्वासो न कार्यः । याहि तर्हि । श्व आत्मनो बन्धुवर्गं विज्ञापय भवन्तः सस्यसंचयेऽवश्यं साहाय्यं कर्तुमर्हथ" इति । तच्छ्रुत्वा शावका अतीव बिभ्युः । आगताया एव जनन्यै यथाश्रुतं न्यवीव-

दन् । तदा सोवाच-"अर्भकाः, यद्येवं मा भैष्ट । यतो बन्धुवर्गः स्वजनस्य हितं प्रति जागरूकः कार्यं करिष्यतीति मिथ्यैव । श्वः किल यद्ब्रवीति तत्समाहिताः शृणुत, मह्यं च निवेदयत" इति । अपरेद्युरपि स्वामी तत्रागत्य बन्धुजनांश्चिरं प्रतिपालयामास । तेऽपि नाययुः । तदा स पुत्रमाह—"भीमक, गच्छाधुना । श्वो द्वे लवित्रे तेजिते कुरु । आवामेव सस्यं लुनाव" । इमां वार्तां शावकाः प्रसुवे न्यवेदयन् । एतदाकर्ण्य साह—"डिम्भाः, अधुनात्रास्माकं वासो नोचितः यतो यः स्वयं किमपि कर्माङ्गीकरोति स प्रायस्तस्यान्तं यायात्" । ततः सा शावकान्सद्योऽन्यत्र निनाय । अपरेऽहनि स स्वामी सपुत्र आगत्य सस्यलवनं व्यधात् ।

तात्पर्यम् ।

यत्कर्म कर्तुं वयं शक्नुमस्तद्विषय इष्टाप्तसुहृत्सु न विश्वस्यात् । यस्तेषु विश्वसिति तस्य द्विधा हानिर्जायते । एकतस्तावन्मूर्ख इव तेषां प्रतिपालनम्, कार्ये प्रत्यनारम्भश्च । द्वितीयस्तावद्वञ्चितत्वादुद्वेगः । य आत्मकार्य आत्मन्येव विश्वसिति तस्यासंशयं कार्यं सिध्यति । असिद्धे मनस उद्वेगो नोत्पद्यते । यतः स निपुणं जानाति न मया तत्सिद्धिप्रयत्न उपेक्षितम् । यत्ने कृते यदि न सिद्धं कार्यं न मे दोष इति ।

---

## कथाष्टात्रिंशी ( ३८ ) ।

### वृकोपमातोः ।



कदाचिद्रात्रावेको डिम्भो मुक्तकण्ठं रुदन्नोपरराम । तं

स्वापयितुं सोपमाता बहुभिः प्रकारैरयतिष्ट । परं स क्रन्द-नान्न व्यरंसीत् । अन्ततः सा तमुवाच—"रे यदि रोदनं न मुञ्चसि तर्हि द्वारि स्थितस्य वृकस्य हस्ते त्वां प्रापयामि"। अस्य वचस उक्तिवेलायां कश्चिद्वृकस्तत्र तत्त्वतः समापपात। स एतच्छ्रुत्वेयं यथोक्तमाचरिष्यतीति बुद्ध्वा चिरमतिष्ठत्। रुदता तेनार्भकेन श्रान्तेन निरवेशि निद्रासुखम्। वृकस्तु क्षुधा बाधितो वनं निववृते। मार्गे गच्छन्स शृगालेन कुशलं पृष्टः। शृगालोऽवदत्—"माम, कथमद्य ते पादा न प्रच-लन्ति"। वृक आह—"मित्र, मा पृच्छ। मूर्खोऽहं तस्या दग्धधात्र्या वचनेन विप्रलब्धोऽस्मि"।

## तात्पर्यम्।

केचन सूरयो न कस्य वचसि प्रतीयादित्युपसंहृत्य स्त्रीविषयकमेतद्वाक्यमित्युदाहरन्ति। परं न तद्युक्तम्। प्राय-शोऽबलाः स्वभावचञ्चलाः सन्ति, निरर्गलं च भाषन्ते। परंतु यथोक्तमनुतिष्ठन्त्योऽपि बहवो विद्यन्ते। इदमेवास्याः कथायास्तात्पर्यं यत्स्त्रियः पुंसो वा वचसि न विश्रम्भः कर-णीयः यद्ब्रुवन्ति तद्विश्वासयोग्यं न वेति विविच्य वर्तनं विधेयम्।—

## कथा नवत्रिंशी ( ३९ )।

## कूर्मगरुडयोः।

कश्चित्कूर्मो भूमौ गतागतैर्निर्वेदं प्रपेदे। विहायोविहारी भूत्वेतस्ततः सृष्टिचमत्काराणां कियद्रामणीयकं तद्द्रष्टव्यमिति तस्य मनस्युदपादीच्छा। स सर्वान्पक्षिणोऽभाषिष्ट—"यो मां

वियत्पथा नेष्यति, सृष्टिसौन्दर्यं च दर्शयिष्यति, तस्मा अहं भूगर्भान्तर्गता मया ज्ञाता रत्नखनीर्दर्शयिष्यामि''। श्रुत्वैतत्तार्क्ष्यः कच्छं खं नीत्वा भूगोलवर्तिनोऽखिलांश्चमत्कारानदर्शत्। ततः कच्छमुवाच—"भोः, कुत्रेदानीं ते रत्नाकराः। दर्शय तूर्णम्''। तदा कच्छो भ्रान्तचित्तवद्व्यवहर्तुं प्रावर्तिष्ट। तदुदीक्ष्य खगेश्वरश्चुक्रोध। तस्य मर्मसु च नखरं व्यापार्य तमहन्।

## तात्पर्यम्।

यदि प्रतिज्ञा नोत्तीर्यते तर्हि हानिर्जायते। ये महान्तस्ते मानभङ्गमाप्नुवन्ति। ये साधारणास्ते मानभङ्गं प्राप्य शरीरपीडामनुभवन्ति। यस्तु केवलं मिथ्याभाषी परवञ्चकः स सर्वस्वं हारयित्वा प्राणानपि जहाति।

---

## कथा चत्वारिंशी ( ४० )।

## सूर्यहिमवाय्वोः।

एकदा सूर्यहिमवायू मम शक्तिरधिका मम शक्तिरधिकेति विवदितुमारेभाते। अत्रान्तरे कम्बलवान्कश्चित्पान्थस्तेन पथा गच्छन्नुभाभ्यां ददृशे। तं दृष्ट्वोभावपि सममन्येताम्—"योऽस्य कम्बलमासयति स एव श्रेष्ठः'' इति। तत्रादौ हिमवायुरग्रेसरोऽभूत्। स यथा यथा कम्बलमासयितुं प्रबलं वातुं प्रावृतत्तथा तथा स पान्थोऽधिकं स्वकम्बलेन शरीरं प्रावृणोत्। ततो वायुः शश्राम। पूषाग्रतोऽभवत्। स प्रथमं नभसि विकीर्णानि हिमजनकानि सर्वाण्यभ्राणि व्यलिनात्। हिमं च निरास्थत्। ततः शनैरासनश्चण्डकिरणांस्तस्य शरीरे युयोज। अनेन सोऽल्पेनैव कालेनोष्मणा

विह्वलो भूत्वा कम्बलं तत्याज । निकटवर्तिन्यां वृक्षवाटिकायां शीतलच्छायां भेजे ।

तात्पर्यम् ।

मनुजमात्रस्य प्रकृतौ बीजरूपेण किमपि धाता निरमास्त । यद्वशात्स परस्य बलात्कारासहिष्णुर्भूतः । अत एव यथा यथा किमपि हठादन्येन कारयितुं यतामहे तथा तथा तदकरणे तस्य बुद्धिर्दृढा भवति । यथा कटूक्तयः सद्धृदयं संहृत्य दुराग्रहवत्कुर्वन्ति, तथा चाटूक्तयः शान्त आचारश्च तदार्द्रीकृत्योपदेशश्रवणानुकूलं विदधति । चिराभ्यासेन यत्किमपि मनुजो बलवदङ्गीकरोति तत्त्याजने बलात्कारं यदि कुर्वीमहि तर्हि प्राणव्ययेनापि तस्य समर्थनेऽभिमान उत्पद्यते । इदमेवात्र सारं हिमवायुरिव यो विरुद्ध उपचारः स नरं स्वमतं दृढं प्रतिपादयितुं प्रोत्साहयति । यश्च सवितेवानुग्रमपि कार्यसाधकमुपायं बुद्धिविलासेन योजयति स एव समीहितं साधयति ।

---

## कथैकचत्वारिंशी ( ४१ ) ।

## सिंहवेषधारिणो रासभस्य ।

कश्चिद्रासभः सिंहचर्मालब्ध । तेन गृहीतेनात्मनः शरीरमाववार । ततःप्रभृति यदा यदा स वनेषु गोचारणक्षेत्रेषु चाभ्रमीत्तदा तदा सर्वे सत्त्वास्तस्माद्भीत्वा विदुद्रुवुः । एकदा स स्वामिना यदृच्छया संजग्मे । तमपि भाययितुं स येते । ततस्तस्य लम्बौ कर्णौ निरीक्ष्यायं मम रासभ इति तेन सद्यो जज्ञे । तत एकं दीर्घं लगुडं गृहीत्वा तं विनिनाय ।

तं च ज्ञापयामास—"यद्यपि त्वं सिंहचर्म पर्यदधास्तथापि त्वं रासभ एवेत्यहं दृढं जानामि" इति ।

तात्पर्यम् ।

यः कोऽपि योग्यतां विना शौर्यस्य च कोविदत्वस्य च सत्त्वस्य चाविर्भावं दर्शयति स हीनोऽज्ञानेव वञ्चयति। परं यदि स ज्ञातृभिः संगच्छते तदा तं तत्त्वतः परिज्ञाय त उपहसन्ति।

---

## कथा द्वाचत्वारिंशी ( ४२ ) ।

### मण्डूकशृगालयोः ।

कश्चिद्वाचाटो नाम मण्डूक एकदा सरसो निष्क्रम्योच्चैःस्थलमध्यासांचक्रे । तत्रस्थस्तारस्वरेण सर्वान्वनपशूनाकार्य वदति—"भोः सत्त्वाः, शृणुत । अहं कुशलो भिषगस्मि । गदमात्रस्यापोहने प्रभवामि" इति । एतावदुक्त्वात्मनो नैपुण्यं प्रकटयितुमायुर्वेदाद्वैद्यशास्त्रेभ्यो वचनान्युज्जगार । वन्यपशवस्तेषामभिधेयं नाज्ञासिषुः । परमयं कोऽपि महांश्चिकित्सक इति तेषामभात् । अतो यद्यत्स निजगाद तत्सर्वं तेषां सम्मतमभूत् । तत्र कोऽपि क्रोष्टासीत् । स एतन्न सेहे । स भर्त्सयन्मण्डूकमाह—"रे पामर, ते मुखं संकुचितम् । किलासीकृतं ते वपुर्निस्तेजस्कं च । स त्वमन्येषां रोगान्दूरीकरोमीति वक्तुं किं न लज्जसे" ।

तात्पर्यम् ।

य आत्मनो दोषान्दूरीकर्तुं न शक्नोति सोऽन्यस्य दोषान्विप्रकर्ष्टुं न यतेत । योऽन्यमुपदिशति स तथाचरेद्यथास्या-

चरणे न कोऽपि संदिह्यात् । एवं सति तस्योपदेशो मान्यो भवति । यो दोषोऽन्यैस्त्याज्य इति वयं लोक उपदिशाम-स्तेन दोषेण वयमेव लिप्यामहे यदि तर्हि कथं स उपदेशो मान्यो भवेत् । वयं चोपहास्याः कथं न भवेम ।

---

## कथा त्रयश्चत्वारिंशी ( ४३ )।

### क्षतिकरणशीलस्य शुनः ।

कश्चिच्छ्वा जनानभिधावति तान्दशति च । अस्य हेतो-स्तस्य स्वामी तस्य गले काष्ठमेकं बबन्ध । एतन्महद्भूषणमि-ति स श्वा मत्वा प्रातिवेश्याञ्शुनस्तिरश्चकार । तान्संनिधौ स्थातुमपि न ददौ । ततस्तेषु कश्चिद्वृद्धस्तं ब्रूते—" तात, गलस्थितेनानेनाहं महत्त्वं प्राप्त इति मन्यसे चेत्सुखं मन्य-स्व । परं य एनं गलेऽभान्त्सीत्तेन महिम्नः कारणमिति नेदं काष्ठं बद्धम् । अपि तु लघिम्नः कारणमिति बद्धमित्यहं तर्कये"।

### तात्पर्यम् ।

केचिद्दोषवन्त एवं साभिमानाः क्षुद्रबुद्धयो वर्तन्ते यत्ते-ष्वीश्वरेण प्रायः किमप्यभिज्ञानचिह्नं स्थापितमस्ति । आत्मनि संस्थितं वैकल्यं ते यथाभिलषितं समर्थयन्तः श्रेष्ठत्वमात्म-न्यापादयन्ति । यः सदसि सम्यग्वक्तुं न शक्नोति, यद्भाषि-ते च जना हसन्ति, स वदति—"विशाला मे बुद्धिः । सपद्यनेका भावना मन आविशन्ति तस्मादिदं भवति" । मूर्ख इति अशिक्षित इति सोपहासं जना यं परिहरन्ति स वक्ति—"ममानुभावोऽसह्यः अतो न कोऽपि मामभ्येति" ।

ईदृशा नरा विचार्यालोचयन्ति चेत्तेषां हितं भवेत् ।

---

## कथा चतुश्चत्वारिंशी ( ४४ ) ।

### आदित्यक्रमेलकयोः ।

एकदा कश्चित्क्रमेलक आदित्यं सप्रश्रयं याचितवान्-"भो आदित्य, यथा गोमहिषादयः शृङ्गिणः कृता भवता, तथा किमहं न क्रिये । विषाणैरास्तैरहं शत्रुभ्यस्त्राणं विधास्यामि । एतां मे विज्ञप्तिं श्रोतुमर्हति देवः" । तं भगवानादित्यो वदति-"रे मूढ, यन्मया तुभ्यं दत्तं तदलं विचार्यैव दत्तम् । तेन संतुष्टेन त्वया भाव्यम् । तदकृत्वा यदन्यस्मै दत्तं तत्पुरस्कृत्य तद्याचसे । अस्य धृष्टत्वस्य दण्डं तद्याशुहि । तव कर्णौ ह्रस्वौ भविष्यतस्त्वं चातिभारवाहको भविष्यसि" ।

### तात्पर्यम् ।

अस्मिञ्जगतीशेन यद्यद्दत्तं तत्तदुपपन्नमेव । ये तदन्यथा कर्तुं यतन्ते तेऽसमीक्ष्यकारिणो मूढा इति वक्तव्यम् । ईदृशानामुद्यमा निष्फला भवन्ति। अपि च ते दुःखभाजो भवन्ति।

---

## कथा पञ्चचत्वारिंशी ( ४५ ) ।

### ऋक्षयोः कौचित्पान्थयोः ।

कौचित्पान्थौ देशान्तरं प्रतस्थाते । ते सशपथं समयं चक्रुर्यद्वर्त्मनि संकट आपतितेऽन्योन्यस्य व्यभिचारो माभूदिति । तत एकस्मिन्गहने गच्छतोस्तयोः कश्चिदृक्षस्तौ प्र-

त्यभिससार। तदा तयोरेकश्चपलाङ्गः कृशोऽविलम्बितं विद्रुतो वृक्षमारुरोह। अन्यः स्थूलत्वाद्द्रुतगमनाक्षमः प्राणानायम्य विगतचेष्टो भूमौ सुष्वाप। स ऋक्षस्तत्रागत्य कर्णे आघ्राय शवोऽयमिति मत्वा पीडामकृत्वा निववृते। ऋक्षे निर्गते वृक्षमारूढः पुरुषः शनैरवतीर्य सस्मितं भाषते—"सौम्य, स ऋक्षः कर्णे किं त्वां कथयामास। यतोऽहं वृक्षगतः स ऋक्षः किमपि कर्णे त्वां मन्त्रयांचक्र इत्यदर्शम्"। स प्रतिबभाषे—"स ऋक्षस्त्वादृशेषु शठेषु विश्वासं मा कुर्विति मामादिदेश"।

तात्पर्यम्।

यदा प्रयोजनं नास्ति तदा बहवो लोभं दर्शयन्ति विश्रम्भार्हाणि च वचांसि भाषन्ते। परं तेषु विषमे तिष्ठन्पुरुषो विरलः। यो लोकरीतिं वेद स ईदृशेषु वचनेषु न विश्वसिति। मुधा कोऽपि न भाषेत। श्रोत्रापि वचनमात्रे विश्वासो न कार्यः। तस्मिन्नुभयोरपि हानिर्भवति।

---

## कथा षट्चत्वारिंशी ( ४६ )।
## केशहीनस्य सादिनः।

कस्य चित्सादिनो वयोधर्मेण केशा नष्टाः स मुण्डोऽभवत्। एतद्वैकल्यं ह्नोतुं स उपकेशं बिभरांचकार। एकदा मृगयादरेण गतस्य तस्य सहसा प्रबलवातेन स उपकेशो ध्मातो भूमिं प्रपेदे। तदासन्नवर्तिनः सहायाः सावमानं जहसुः। दृष्ट्वैतत्स साद्यपि जहास, उवाच च—"मे केशा अपि शिरसि नावाशिषन्कथं तर्हि मे परकीयाः शिष्युः"।

तात्पर्यम् ।

कलहपरा आत्मन इतरेभ्यश्च न सुखं ददति । न्यूनताविरहिता न केऽपि सन्ति । परं यः कलिमुत्पादयंश्छिद्रमन्विष्यन्नन्येषु दोषारोपं करोति स सर्वेषामप्रियो भवति। अयं दोषः सर्वगुणान्मज्जयति । अतो यश्चित्तस्वास्थ्यं जनानां प्रीतिसंपादनं चेच्छति स कलहनिमित्तं नान्विष्यति । निमित्ते दृष्टेऽलक्ष्यं करोति । यल्लक्ष्यगतं तत्परिहासबुध्या गृह्णाति। केचिज्जना अन्यस्य दोषं प्रकटयन्ति । ततो यथा यथा स तप्यते तथा तथा ते संतोषं प्राप्नुवन्ति । तं मर्मच्छिद्भिर्वचनैरधिकमभियुञ्जते । ईदृशानां दुष्टाशयानामभिभवायायमेवोपायो दृश्यते । यदस्माभिरसंजातामर्षैस्तेषामुक्तेः परिहासः कार्यः कदाचिदन्यस्योपहासात्पूर्वमात्मनः परिहास आरम्भणीयः ।

---

## कथा सप्तचत्वारिंशी ( ४७ ) ।

### पात्रयोः ।

मृत्पात्रं रीतिपात्रं च नद्यास्तीर आस्ताम् । ऊर्ध्वप्रदेशादागतेन पूरेणोह्यमानयोस्तयोर्मृत्पात्रं चिन्तापरं बभूव—"रीतिपात्राभिघाते संवृत्तेऽहं भङ्क्ष्यामि" इति । दुःखितं तद्दृष्ट्वा रीतिपात्रं तदुवाच—"भोः, मा बिभीहि । अहं त्वां रक्षिष्यामि" इति । मृत्पात्रं तदावदत्—"भ्रातर्, दूरत एव मां प्रति भाषस्व । त्वत्तोऽहमतीव बिभेमि । यतः परस्पराभिघाते नाशो ममैव भविता" ।

तात्पर्यम् ।



श्रीमता सार्धं संबन्ध आप्तभावो वा दरिद्रं विपदि

पातयति । श्रीमतः प्रातिवेश्यकलहेऽयं कलहं करोतु, स वा कलहं करोतु, दरिद्र एव नश्यति ।

## कथाष्टाचत्वारिंशी ( ४८ )।

### बकमयूरयोः ।

एकदा कोऽपि बर्हीं बकं दृष्ट्वात्मनः कलापभारमुद्यम्य क्षुद्रवत्तं मत्वा जातरूपकल्पानां पिच्छानां शोभां दर्शयामास। तस्य दर्पं शातयितुं बकस्तं वदति—"रे, यदि सुन्दरपिच्छान्येव महत्त्वमानयन्ति तर्हि मयूराणां जातिः श्रेष्ठा । परं त्वहं मन्ये बालानां क्रीडनकं भूत्वा भूमौ प्रसर्पणादन्तरालगमनसामर्थ्यमधिकं महत्त्वं ददत इति" ।

### तात्पर्यम् ।

यदि वयं किमपि गुणं बिभृमस्तस्यान्यस्मिन्नभावे च यदि वयं तं न्यक्कुर्मस्तर्हि तस्य गुणेनास्मासु च तस्याभावेन स किमस्मान्न न्यक्कुर्यात् । सर्वगुणैरुपेतो न कोऽपि । अतोऽन्यं प्रति पामरत्वारोपो मौढ्यम् । उपरितने प्रस्तावे मयूरो बाह्यशोभयात्मानं बहु मेने । ये तत्त्वार्थदर्शिनस्ते बाह्यगुणान्न गणयन्ति । ये बाला दुर्विदग्धास्तानेव बाह्यचेष्टा मोहयन्ति । परं ये धीमन्तस्तेऽन्तरवस्थितानेव गुणान्बहु मन्यन्ते । यस्य स्वान्ते सद्वासना यश्च विनीतः स एव महान् । महार्घाणि वस्त्राणि दुकूलपत्त्रोर्णादीनि रत्ननिर्मितालंकाराश्च यदि मानार्हाः स मानस्तन्निर्मातारं गच्छति न तु परिदधतम् । इदमेवात्र सारम् । ये दुकूलादिभिरात्मनि मानमारोपयन्ति त आत्मवञ्चका ज्ञातव्याः ।

## कथैकोनपञ्चाशी ( ४९ )।

### समुच्छ्रितात्पतर्वोः ।

नदीरोधसि रूढस्यैकदा वात्या बलेनोन्मूलितस्य स्रोतसि महता वेगेनोह्यमानस्य कस्यचित्समुच्छ्रिततरोर्वीरुधः कंचनाल्पतरुं जघृषुः । परं सोऽल्पतरुर्निराबाध एवासीत् । ततः स महांस्तरुरल्पं साश्चर्यं पृच्छति—"किं भोः, प्रबलया यया मादृशोऽप्युन्मूलितस्तस्यां वात्यायां कथं त्वयात्मा संरक्षितः"। ततः सोऽल्पतरुस्तं प्रत्युवाच—"माम, आवयोरुभयोर्वर्तनं भिन्नम् । मारुते संचलितेऽहं नीचैः प्रणमामि । बलीयसा स्पर्धा निष्फलेत्यहं बोधामि । त्वं त्वात्मनो बले विश्वस्य सदर्पमशिथिलस्तिष्ठसि" ।

### तात्पर्यम् ।

यस्याग्रतो वयं स्थातुमसमर्थास्तं प्रति प्रणतिरेव श्रेयोवहा । तत्रावलेपोऽनर्थकारकः ।

---

## कथा पञ्चाशी ( ५० ) ।

### व्याघ्रक्रोष्ट्रोः ।

एकदा कश्चित्कुशलो धनुर्धरो मृगयार्थं वने बभ्राम । तेन कृतेन बहुपशूनां हननेन केषांचित्पृष्ठतो गमनेन सर्वे वन्यपशवस्त्रस्ता बभूवुः । उद्विग्नमनसश्च तरुलतागृहगुहान्तरितानि गात्राणि चक्रुः । तेषामिमं संरम्भं दृष्ट्वा व्याघ्रस्तानुपेत्य धीरं प्रोवाच—"भोः पशवः, मयि जीवति युष्मानयमुद्वेगः प्राप्तः। युष्मासूद्विग्नेषु धिङ् मां मत्पौरुषं च । मा भैष्ट । धृतिं मा मुञ्चत । मे शौर्यं पराक्रमं च विश्वसित । अहमेकाकी यु-

स्माकं रिपुमुच्छेत्स्यामि । तदलमुद्वेगेन" । एवंविधान्यन्यानि च प्रगल्भानि वचांस्युदीरयति तस्मिँल्लाङ्गूलेन भूमिं ताडयति क्रुधा भूमिमुल्लिखति च बाणासनमुक्त एकः शरस्तं कुक्षौ विव्याध । तस्मिन्नेव क्षणे स प्रबलवेदनया व्याकुलो भूत्वा सुमहतीं गर्जनामकार्षीत् । यावत्तं शरं मुखेन पुङ्खे धृत्वा निष्कासयितुं यतते तावत्कश्चिच्छृगालस्तमभ्येत्य सविस्मयं पप्रच्छ—'देव, को नामायं बलवान्रिपुः स्याद्येन भवादृशोऽपि महासत्त्व एवं विकलोऽकारि" । व्याघ्रः प्रत्यवादीत्—"भद्र क्रोष्टो, ममानुमानं वैयर्थ्यमुपागतम् । यो मामपि विकलं कृतवान्स मानुषजातीयोऽग्रतो वर्तते । सोऽस्माभिस्तिर्यग्भिर्जेतुमशक्य एव" ।

## तात्पर्यम् ।

बुद्धिसाहित्यमस्ति चेद्बलशौर्ये महत्कार्यं कुरुतः । तस्याभावे तु त एव दुःखाय भवतः । केचिद्बलशौर्यवन्तस्तयोरवलम्बनेनापरीक्षितकारिणो भवन्ति । तदा शत्रुभिः पूर्वमविज्ञातं किमपि छिद्रं तैर्दृश्यते । रिपवस्तु तस्मिञ्ज्ञाते तेषां घाताय प्रयुञ्जते । ये बुद्धिमन्तस्ते बलवन्तमप्यभिभवन्ति । यथास्मिन्प्रस्तावे मनुष्यः पशुभिरजय्य इति दर्शितं तथैव प्रज्ञावानप्रबुद्धैर्बलिभिरनभिभवनीयः । रिक्तपाणिः प्रज्ञो दण्डपाणिरज्ञश्च संगच्छेते यदि प्रज्ञो बुद्धिप्रभावेण पाणिगतेन दण्डेनैव तं प्रहरति । एवं तावन्निश्चयते यद्व्याघ्रस्येव बलशौर्ये बुद्धिमतश्छद्मप्रयोगैस्तृणीक्रियेते ।

## कथैकपञ्चाशी ( ५१ )।

### सिंहबलीवर्दानाम्।

चत्वारो बलीवर्दा एकत्र समाचरन्तो मैत्रीभावेन वर्तमाना इतरेतरं कदापि न व्यभाक्षुः। कश्चित्सिंहस्तान्समेतानवलोक्य नित्यं व्यचिन्तयत्—"एकोऽप्येतेषां मम भोज्यो भवेत्तर्हि समीचीनं स्यात्" इति। स सिंह एकैकशस्तान्व्यापादयितुं समर्थो बभूव। परं च समेतानां तेषामुपर्युत्पतितुं न शशाक। अतः कानिचिदहानि दूरस्थ एव प्रतीक्षांचक्रे। परं संकल्पितसिद्धिं नावाप। अन्ते स निरणैषीत्—"यावदिमे एकमते वर्तन्ते तावन्न मे वशं गमिष्यन्ति। तर्हि पिशुनो भूत्वैतेषां भेदः कार्यः"। एवमनुष्ठिते ते बलीवर्दाः परस्परस्योपरि द्वेषबुद्धिं बबन्धुर्व्यभञ्जंश्च। ततः सिंहोऽश्रमेण तानवधीत्।

तात्पर्यम्।

यावदैकमत्यं तावच्छत्रवः किमपि कर्तुं न शक्ष्यन्ति। ऐकमत्यस्यायं महिमा। अतः सूचकवचनेष्वरिवचःसु च विश्वासो निपुणं परीक्ष्य कर्तव्यः।

---

## कथा द्विपञ्चाशी ( ५२ )।

### सिंहवनेचरयोः।

कश्चिद्वनेचर एकदा केनचित्सिंहेन संगतो भूत्वा तेन सह चिरं गोष्ठीसुखास्वादनपरो बभूव। उभयोरालापे यद्यदुदीरितं तत्तदुभयोरप्यभिमतमासीत्। परं चान्ते सिंहः श्रेष्ठ उत मानुष इति विवादास्पदमभूत्। मानुष एव श्रेष्ठ इति सम-

र्थयितुं स वनेचरो लुप्तशक्तिरभवत्। ततस्तत्रैव प्रदेश एक-स्मिन्नश्ममञ्चे स्फाटिके मानुषसिंहयोः प्रतिकृती आस्तां ते तेन निर्दिष्टे। यतस्तयोर्या मानुषाकृतिरासीत्तया सिंहमध्यास्य तस्य सटा बलवद्धृता आसन्। सिंहस्ते दृष्ट्वा वनेचरमप्राक्षीत्—"किमेतावदेव ते साधनम्। शृणु मे वचः येन प्रस्तरदारकेणैते निर्मिते स मानुष एवासीत्। यदि स सिंहोऽभविष्यत्तर्हि विपरीतमद्रक्ष्यः"।

तात्पर्यम्।

ये पक्षपातिनः सन्ति त आत्मनो वचः समर्थयितुमात्मपक्षावलम्बिनां वचनान्युपन्यस्यन्ति। अतः कस्मिन्नपि विषयेऽर्थिप्रत्यर्थिनोर्वचांस्यनाकर्ण्य सिद्धान्तो न करणीयः।

---

## कथा त्रयःपञ्चाशी (५३)।

### पान्थवनदेवतयोः।

काचिद्वनदेवता शिशिरर्तौ वने भ्राम्यन्ती कंचित्पान्थं यदृच्छया ददर्श। हिमपीडया तं मृतप्रायं निरूप्य सा करुणार्द्रचित्ता भूत्वा तं वक्तुमुपचक्रमे—"भो पान्थ, निकटवर्तिन्यां गिरिगुहायां म आगमिष्यसि यदि तर्हि ते हिमबाधामपनेष्यामि" इति। ततः स पथिकस्तया गुहायामासनादिनोपचरितः। तत्र संनिहिताङ्गारवशान्महत्यप्यूष्मणि स पान्थो हिमजनितगात्रवेपथुर्जडीभूता अङ्गुलीराध्मातुं प्रववृते। तद्दृष्ट्वा सा तमपृच्छत्—"भद्र, किमेतत्" इति। स प्रोवाच—"मे करौ शीतेन जडीकृतौ। तौ तापयितुमेवं करोमि।" सा देवता मानुषरीत्यनभिज्ञा पान्थे तं शीततापनात्मकमद्भुतं गुणमवलोक्य विस्मिता तस्य पुरतः कानिचि-

त्फलमूलान्याहारार्थमानैषीत् । तान्यत्युष्णान्यासन्नतः पान्थस्तान्यपि फूत्कर्तुमारब्धः । ततो देवतया स भूयोऽप्यप्रच्छि—"किं भोः, किमेतान्यपि फूत्करोषि"। स प्राह—"अत्युष्णान्येतान्यतस्तानि शीतानि करोमि"। एतन्निशम्य देवता संक्रुद्धा पान्थमवदत्—"भो दुर्बुद्धे, कृतं तव मैत्र्या यस्त्वमेकेनैव मुखेन शीतमुष्णीकरोषि, उष्णं च शीतीकरोषि" एतावदुक्त्वा पान्थस्तयार्धचन्द्रं दत्त्वा बहिर्निःसारितः।

तात्पर्यम् ।

स्थाने खलु यदेकेनैव मुखेन निन्दास्तुती आचरन्तः पुमांसः सद्भिस्त्याज्या भवन्ति । अन्ये केचिदात्मनोऽर्थसिद्ध्ये प्रियं श्रुतिमनोहरं च जल्पन्ति परं यदा तेषामर्थसिद्धिर्जायते तदा तेनैव मुखेन तं भर्त्सयन्ति । नैष न्यायः । अनेनैव दुष्कर्मणा बहवः सन्तो लघुतामापन् । अतो विरुद्धवचनपटुना पुंसाऽसंगमो वरम् ।

---

## कथा चतुःपञ्चाशी ( ५४ )।

### देवशकटवाहकयोः ।

कश्चन निर्बुद्धिः शकटवाहकः शकटं नयन्कस्मिंश्चित्स्थले पङ्करुद्धचक्रं तं धुर्याणां महता प्रयत्नेनापि मोचयितुं न शशाक । अक्षमस्तु स देवमह्वत्—"भो देव, दीनोऽहम् । निराश्रयोऽहम् । अस्मिन्कृच्छ्रे मे सहायो भव"। देवस्तु तच्छ्रुत्वा शकटवाहं च तूष्णीमासीनं दृष्ट्वा तमभाषिष्ट—"भो मूढ, किमिति भवानलसो जोषमास्ते"। मत्साहाय्यं वाञ्छसि चेदुत्तिष्ठ । धुर्यांश्चोदय । रथाङ्गं स्कन्धेनोपस्तम्भय ।

एवं कृतेऽहं साहाय्यं करोमि" । ततः शकटवाहेन तथा कृते शकटः पङ्काद्बहिरगमत् ।

तात्पर्यम् ।

य उद्यममवलम्ब्य दैवसाहाय्यमिच्छति स तल्लभते । निरुद्यमो दैवसाहाय्यं कदापि न लभते ।

---

## कथा पञ्चपञ्चाशी ( ५५ ) ।

### हंसीमनुजयोः ।

कस्यचिन्मनुजस्यावास एका हंसी बभूव । सा प्रत्यहं स्वर्णस्यैकमण्डं निचिक्षेप । तद्गृह्णतस्तस्याशापचितिरिष्टा । परं तस्या उपचयोऽभवत् । सोऽचिन्तयत्— "अण्डनिर्गमस्थानमासादयेयमपारं धनमेकपद एव लभेय" । तदा स तस्या उदरं विदारयामास । ततो यावदन्तरवलोकयति तावद्रिक्तमेव ददर्श । पश्चाद्बह्वतप्यत ।

तात्पर्यम् ।

ईश्वरो जगदात्मा यं प्रति त्यागभोगायालंभविष्णु धनं ददाति तस्य संग्रहेच्छा चेन्मितव्ययेन तस्मादेव किंचित्किंचित्स उद्धरेत् । इदमनादृत्य योऽतिलोभेनाकाण्डे श्रीमान्भवितुमीहमानो महति साहस आत्मानं योजयति स साहसे वन्ध्यप्रयत्नो भूत्वा मूलधनमपि हारयति ।

---

## कथा षट्पञ्चाशी ( ५६ )

### स्वेच्छाचारिणोऽजस्य ।

कश्चिदजः स्वेच्छया चचार । एकदा हलधुरि नियुक्तं कमप्युक्षाणं विलोक्य तमाह— "अरे उक्षन्, त्वं स्वामिनः

कृते स्कन्धे कुशमूढ्वा यामचतुष्टयेऽपि हलं चालयसि ततोऽहं जाने यथा त्वं कोऽपि हीनवृत्तिरतिभारवाहकः सत्त्वोऽसि। पराधीनतैव ते प्रिया। अन्यथैवं न व्यधास्यः। पश्य कथमहं कालं नयामि। स्वैरं गच्छामि, शीतलच्छायामध्यासे, नृत्यामि, इतस्ततः उत्पतामि, तृषितः सन्नच्छं निर्झरगतं वारि पिबामि। त्वं कलुषमपि वा न लभसे"। स उक्षा सर्वमप्यवहितमनसा शुश्राव। किंचिदप्यनुक्त्वा हलकर्षणे भूयः प्रयुक्तः। ततः कियति काले याते ग्रामदेवतामुद्दिश्य कोऽप्युत्सव आजगाम। तस्मिन्दिने तस्याजस्य स्वामी कुसुममालाभिस्तमलंकृत्य देवताया उपहारं कर्तुं तमनैष्ट। तस्य ग्रीवायां यावत्सोऽसिधेनुकां व्यापारयति तावत्स उक्षा तत्रागत्य तं कर्णे पृच्छति—"रे मूर्ख, किं ददर्शिथ तव स्वेच्छाचारस्योदर्कम्। अद्ययावत्ते स्वामी यत्त्वां जीवन्तं रक्षितवांस्तदेतदर्थमेव। ब्रूह्यधुना कतरस्यावस्था साधीयसी, तव मम वा"।

---

तात्पर्यम्।

अन्यं विपदि समापतितं वीक्ष्य तस्योपालम्भोऽधमस्य मूर्खस्योन्मत्तस्य व्यापारः। दैवचक्रं सर्वदा भ्रम्यति। एकस्य विपदोऽन्यं संक्रामन्ति। अन्यस्य कस्यचित्संपद एनं संक्राम्यन्ति। एवं संपद्विपदोर्विनिमयो भवति। तथा हि—"नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण"। अस्मिन्कथानक एतदपि दर्शितं भवति यत्स्वेच्छाचारिणां स्वच्छन्दानुवर्तिनां परिणामो दुःखो भवति। ये पुनरुद्यमिनस्ते स्वोद्यमस्य फलमनुभूय सुखमनुवते। ये निरङ्कुशा निर्मर्यादास्ते जीविका-

मलभमाना लोकान्वञ्चयन्ति बलात्कारं कुर्वन्ति, स्तेये व्यापृता भवन्ति। ईदृशानि दुष्कर्माणि कुर्वाणा महद्भाग्यमुपभुञ्जाना ये न तादृशा ये च स्वकष्टार्जितेनैव द्रव्येण वृत्तिं कुर्वते तान्हसन्ति। परंतु ये चौरा वञ्चका मिथ्याभाषिणस्तेषां भाले कारावासः शूलरोपणं वा लिखितमेव विधात्रा। तेषामुदर्कं दृष्ट्वोद्यमिनः स्वामेव स्थितिमसंशयं श्रेयसीं मन्येरन्। अन्यच्च ये स्वेच्छाचारास्ते व्यापारशून्यत्वाद्दुर्व्यसनिनो दानभोजनासनशय्यादिषूच्छृङ्खला भवन्ति। अनेन हेतुना ते काममृत्युवशा भवन्ति।

---

## कथा सप्तपञ्चाशी ( ५७ )।

### द्वीपिगोमाय्वोः।

एकदा द्वीपी चेतस्येवमकरोत्। मद्देहगतांश्चित्रवर्णान्सुन्दरांश्च बिन्दून्विलोक्य रूपे सिंहोऽपि मत्सादृश्यं कर्तुं न शक्ष्यति। केऽन्ये पशवः। ततः सत्त्वमात्रं धिक्चकार। तं क्रोष्टोवाच—"द्वीपिन्, महानयं ते भ्रमः। यदहं कथयामि तत्परमार्थतो गृहाण। यन्मनःसमुन्नत्याद्यन्तरङ्गगुणेभ्यो विना बाह्यगुणैर्भूषणं नैव भूषणमिति सन्तः स्मरन्ति"।

### तात्पर्यम्।

यः सुन्दरः स सुभगंमन्यो भूत्वा यदि वर्तेत तर्हि तस्य सुभगत्वं तस्य गुणत्वं नावहति। स्त्रीषु या गुणवती सुभगा च तस्या एव कीर्तिः प्रथ्यते।



---

## कथाष्टपञ्चाशी ( ५८ )

### बिडालशृगालयोः ।

कश्चित्स्थूलोतुः क्रोष्टा चारण्ये प्रच्छायशीतले शिलातले राजनीतिविषये गोष्ठीसुखमन्वभूताम् । तदा क्रोष्टा ललाप—"भो मार्जार, अत्रस्थानस्मान्यदि महद्व्यसनमुपतिष्ठेत तर्ह्यहं सहस्रप्रकारैरात्मानं रक्षिष्यामि । परंतु तवार्थेऽहमतीव क्लिश्ये । कथं त्वं भवसीति" । बिडालोऽवादीत—"सखे, एकां युक्तिमहं दृढं जाने । सा निष्फला चेद्दुर्गतिं प्राप्स्यामि" इति । क्रोष्टाह—"एवं चेद्बलवतीव मे चिन्ता मन्दभाग्यस्य तव कृते । एकां द्वे वा युक्ती ते शिक्षयामि परंत्वपि जानासि नायं काल उपदेशस्य । स्वार्थ एवेदानीमनुष्ठातव्यः । बाढम् । प्रणामः, प्रणामः । साधयामि तावदहम् । एतावदुक्त्वा प्रचलितः । अस्मिन्नेवान्तरे श्वभिरनुसृता व्याधास्तस्यानुपदमेव प्राप्ताः । तदा बिडालो वृक्षारोहणरूपामेकामेव युक्तिमज्ञासीत्तामाश्रित्य रक्षित आत्मा तेन । क्रोष्टुः सहस्राणामेकाप्युपयुक्ता नाभूत् । तस्मिन्व्यस्तचेतसि चत्वारि पञ्च वा पदानि यात्यनुधावन्तः श्वानस्तं पराजिग्यिरे ।

### तात्पर्यम् ।

अन्यतोऽधिकं मे प्रज्ञाबलमिति यो विकत्थते स प्रायः स्वयं मूर्खोऽस्ति । यो धीमान्स समये बुद्धिप्रभावं दर्शयेत् । वृथाप्रगल्भनेन किं जना आयासयितव्याः । एकापि युक्तिः पूर्णज्ञाता समये स्फुरन्ती च यमर्थं साधयति सोऽर्थो

युक्तिसहस्रेणापि न सिध्यति । सहस्रबुद्धिर्विचार्य कुण्ठितो भूत्वान्ते विलोभ्यते । तथैवैकापि विद्या यदि सम्यगधीता सैव कार्यसाधिका भवति । नैकविद्याज्ञाने समय एकस्या अप्यनुपयुक्तत्वे प्रयोजनाभावेन दुःखमेव संपद्यते ।

---

## कथा नवपञ्चाशी ( ५९ ) ।

### पारावतचरणायुधयोः ।

कश्चिन्नर एकं पारावतं धृत्वा तस्य गरुतोः कानिचित्पिच्छान्युद्धृत्य तं कृकवाकधिष्ठिते वाटे मुमोच । तत्रस्थं तं ताम्रचूडा वारंवारं चञ्च्वा प्राहार्षुः । तेभ्यो विकीर्णेभ्यो धान्यकणेभ्यस्तं न्यवारयन् । एवं कतिचिदहानि क्लेशेन यापयित्वा स समाहितो बभूव । सोऽभ्यधात्—"नामी गृहमेधिनो धर्मं जानन्ति । यतो गृहागतस्यातिथेः सत्कारमकृत्वा तं पीडयन्ति, दयाहीनाः शठा इमे" इति । पश्चात्सोऽद्राक्षीत् । त एव कुक्कुटाः सप्तकृत्वो दशकृत्वो मिथः कलहं कृत्वा संप्रजह्रिरे । तदा समाधाय सोऽभिधत्ते—"ये ज्ञातीनप्युद्रवन्ति तेऽन्यजातीयं मां बाधन्त इत्यस्मिन्कि चित्रम्" ।

#### तात्पर्यम् ।

ये ज्ञातिष्वपि कलिमुत्पादयन्त्यन्योन्यमुपप्लवन्ति च तैरन्यजातीयास्त्रासिताश्चेत्केनापि विषादो न कर्तव्यः ।

# कथा षष्टी ( ६० )।

## कस्तूरीमृगस्य ।

कस्यचिन्मृगविशेषस्य नाभौ कस्तूर्युपलभ्यते । अतस्तस्मिन्दृष्टमात्रे जनास्तमनुधावन्ति, तं शस्त्रघातं घ्नन्ति । एकदा कंचिदेवंविधं मृगं पुरतो गच्छन्तं विलोक्य व्याधाः श्वानश्च तस्य पृष्ठतो लग्नाः । अनेन मृगं महद्भयमुपस्थितम् । कथमियमापन्निस्तरणीयेति स न बुबोध । अत्रान्तरे स मृगो व्यचिन्तयत्—"इमे घातुकाः कस्तूर्यर्थे मां जिघांसन्ति । नान्यो हेतुः । तस्यां त्यक्तायां सुखी भवानि" इति । ततो धैर्यमवलम्ब्य तस्मिन्ननुष्ठिते व्यसनान्मुमुचे ।

### तात्पर्यम् ।

एकोऽन्यमनुधावति तस्य हेतुः प्रायो लोभाद्व्यतिरिक्तो न । अतो यदा यदेयमापदापतति प्रतीकारोपायश्च दृग्गोचरो न भवति तदा यस्य वस्तुनो लोभेन शठा अस्मान्दुन्वन्ति तत्त्यजेदात्मनो मानहानिमकृत्वात्मानं संरक्षेत् । मानरक्षणे जाते यदि सर्वस्वहानिरुपतिष्ठेत सा हानिरूपेण न ग्राह्या ।

